समाध्यारूढ़ो युक्ततरः श्रवणादिभक्तिमांस्तु युक्ततम इति । "भक्ति"शब्दः-सेबाभिधायी-"भज इत्येष वै धातुः सेबायां परिकीर्त्तितः। तस्मात् सेवा वुधैः प्रोक्ता 'भक्ति'शब्देन भूयसी" इति स्मृतेः। एतां भक्तिं श्रुतिराह-"श्रद्धाभक्तिध्यानयोगादवेहि" इति, "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥" इति, "भक्तिरस्य भजनं तदिहामुत्रोपाधिनैरास्येनामुष्मिन् मनःकल्पनमेतदेव नैष्कर्म्यम्" इति, "आत्मानमेव लोकमुपासीत" इति, "आत्मा वा अरे द्रष्टव्यः श्रोतब्यो मन्तब्यो निदिध्यासितब्यो मैत्रेयि" इति चैबमाद्याः। सा च भक्तिर्भगबत्स्वरूपशक्तिवृत्तिभूता बोध्या-"बिज्ञानघनानन्दघना सच्चिदानन्दैकरसे भक्तियोगे तिष्ठति" इति श्रुतेः। तस्याः श्रबणादिक्रियारूपत्वं तु चित्सुखमूर्त्तेः सर्व्वेश्वरस्य कुन्तलादिप्रतीकत्वबत् प्रत्येतव्यम्-श्रवणादिरूपाया भक्तेश्चिदानन्दत्वन्त्वनुबृत्त्यानुभाव्यं सितानुसेबया पित्तबिनाशे तन्माधुर्य्यमिवेति ॥४७

गीताकथासूत्रमवोचदाद्ये कर्म्म द्वितीयादिषु कामशून्यम् ।<br>
तत् पञ्चमे वेदनगर्भमाख्यन् षष्ठे तु योगोज्ज्वलितं मुकुन्दः ॥

इति श्रीमद्भगवद्गीतोपनिषद्भाष्ये षष्ठोऽध्यायः ।

## सप्तमोऽध्यायः

श्रीभगवानुवाच-

मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः ।<br>
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥१॥

साराºबº—कदा सदानन्द-भुबो महाप्रभोः,<br>
कृपामृताब्धेश्चरणौ श्रयामहे ।



यथा तथा प्रोज्झितमुक्तितत्पथा,<br>
भक्त्यध्वना प्रेमसुधामयामहे ॥ (१)<br>
सप्तमे भजनीयस्य श्रीकृष्णैश्वर्य्यमुच्यते ।<br>
न भजन्ते भजन्ते ये ते चाप्युक्ताश्चतुर्विधाः ॥ (२॥

प्रथमेनाध्यायषट्केनान्तःकरणशुद्ध्यर्थकनिष्कामकर्म्मसापेक्षौ मोक्षफलसाधकौ ज्ञानयोगावुक्तौ। इदानीमनेन द्वितीयाध्यायषट्केन कर्म्मज्ञानादिविमिश्र-श्रवणान्निष्कामत्व-सकामत्वाभ्यां च सालोक्यादि-साधकस्तथा सर्व्वमुख्यः कर्म्मज्ञानादिनिरपेक्ष एव प्रेमवत्पार्षदत्वलक्षणमुक्तिफलसाधकस्तथा "यत् कर्म्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्" इत्यादौ "सर्व्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा। स्वर्गापवर्गं मद्धाम" इत्याद्युक्तेर्विनापि साधनान्तरं स्वर्गापवर्गादिनिखिलसाधकश्च परमः स्वतन्त्रः सर्व्वसुकरोऽपि सर्व्वदुष्करः श्रीमद्भक्तियोग उच्यते । ननु "तमेव विदित्वा अतिमृत्युमेति" इति श्रुतेः, ज्ञानं विना केवलया भक्त्यैव कथं मोक्षं ब्रूषे? मैवं, 'तमेव तत् पदार्थं परमात्मानमेव बिदित्वा साक्षादनुभूय, न तु त्वं-पदार्थमात्मानं नापि प्रकृतिं नापि वस्तुमात्रं विदित्वा मृत्युमत्येति'—इति अस्याः श्रुतेरर्थः । तत्र सितशर्करा-रसग्रहणे यथा रसनैव कारणं न तु चक्षुःश्रोत्रादिकं तथैव परब्रह्मास्वादे भक्तिरेव कारणम्। भक्तेर्गुणातीतत्वात्तयैव गुणातीतस्य ब्रह्मणो ग्रहणं सम्भवेत्, न तु देहाद्यतिरिक्तात्मज्ञानेन सात्त्विकेन। "भक्त्याहमेकया ग्राह्यः" इति भगवदुक्तेरिति, "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः" इत्यत्र सबिशेषं प्रतिपादयिष्यामः। ज्ञानयोगयोर्मुक्तिसाधनत्वप्रसिद्धिस्तु तत्रस्थ-गुणीभूतभक्तिप्रभावादेव, तया बिना तयोरकिञ्चित्करत्वस्य वहुशः श्रवणात्। किञ्च, अस्यां श्रुतौ बिदित्वा इत्यनन्तरम् एब-कारस्याप्रयोगादेब । योगव्यबच्छेदा-

भावे ज्ञापिते सति, तस्मादेव परमात्मनो विदितात् कचिद्-विदितादपि मोक्ष इत्यर्थो लभ्यते। ततश्च भक्त्युत्थेन निर्गुणेन परमात्मज्ञानेन मोक्षः। क्वचित्तु भक्त्युत्थं तज्ज्ञानं विनापि केवलेन भक्तिमात्रेण मोक्ष इत्यर्थः पर्य्यवस्यति। यथा मत्स्य-ण्डिकापिण्डाद्रसनादोषेणालब्धस्वादादपि भुक्तात् तदेक-नाश्यो व्याधिर्नश्यत्येवात्र न सन्देहः। "मत्स्यण्डिकानि ते खण्ड-विकारे शर्करासिते" इत्यमरः। श्रीमदुद्धवेनाप्युक्तं (भाः १०।-४७।५६।)—"नन्वीश्वरोऽनुभजतोऽविदुषोऽपि साक्षाच्छ्रेयस्त-नोत्यगदराज इवोपयुक्तः" इति। मोक्षधर्म्मे नारायणेऽप्युक्तं-"या वै साधनसम्पत्तिः पुरुषार्थचतुष्टये। तया विना तदाप्नोति नरो नारायणाश्रयः" इति। एकादशेऽप्युक्तं "यत् कर्म्मभिर्यत्त-पसा ज्ञानवैराग्यतश्च यत्" इत्यादौ "सर्व्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा" इति। अतएव "यन्नाम सकृच्छ्रवणात् पुक्कसोऽपि विमुच्यते संसारात्" इत्यादौ बहुशो वाक्यैर्भक्त्यैव मोक्षः प्रतिपाद्यत इति। अथ प्रकृतमनुसरामः,—"योगिनामपि सर्व्वेषां मद्गतेनान्तरात्मना। श्रद्धावान् भजते यो मां स मे युक्ततमो मतः॥" इति त्वद्वाक्येन त्वन्मनस्कत्वे सति त्वज्जनविषय-कश्रद्धावत्त्वमिति त्वया स्वभक्तविशेषलक्षणमेव कृतमित्यवगम्यते। किन्तु स च कीदृशो भक्तस्त्वदीयज्ञानविज्ञानयोरधिकारी भवतीत्यपेक्षायामाह—मय्यासक्तेति द्वाभ्याम्। यद्यपि "भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एककालः। प्रपद्यमानस्य यथाश्नतः स्युस्तुष्टिः पुष्टिः क्षुदपायोऽनुघासम्॥" इत्युक्तेर्मद्भ-जनप्रक्रमत एव मदनुभवप्रक्रमोऽपि भवति, तदप्येकग्रासमात्र-भोजिनो तथा तुष्टिपुष्टी न स्पष्टे भवतः, किन्तु बहुतरग्रास भोजिन एव। तथैव मयि श्यामसुन्दरे पीताम्बरे आसक्तम् आसक्तिभूमिकारूढं मनो यस्य तथाभूत एव त्वं मां ज्ञास्यसि।



यथा स्पष्टमनुभविष्यसि, तत् शृणु कीदृशं योगम् मया सह संयोगं युञ्जन् शनैः शनैः प्राप्नुवन् मदाश्रयः, मामेव, न तु ज्ञानकर्म्मादिकमाश्रयमाणोऽनन्यभक्त इत्यर्थः। अत्रासंशयं समग्रम्' इति पदाभ्यां मदीयनिर्व्विशेषब्रह्मस्वरूपज्ञानं "क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्। अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते॥" इत्यग्रिमोक्तेः ससंशयमेव। तथा ज्ञानि-नामुपास्यं यद्ब्रह्म परममहतो मम महिमस्वरूपमेव। यदुक्तं मयैव सत्यव्रतं प्रति मत्स्यरूपेण—"मदीयं महिमानञ्च परं ब्रह्मेति शब्दितम्। वेत्स्यस्यानुगृहीतं मे" इति, अत्रापि "ब्रह्मणो हि प्रतिष्ठाहम्" इति। अतो मज्ज्ञानापेक्षया तज्ज्ञानमसमग्र-मिति द्योतितम्॥ १॥

गी०भू०-सप्तमे भजनीयस्य स्वस्यैश्वर्य्यं प्रकीर्त्त्यते।
चातुर्विध्यञ्च भजतां तथैवाभजतामपि॥

गी०भू०—आद्येन षट्केनोपासकस्य जीवस्य स्वरूपं तत्प्रा-प्तिसाधनञ्च प्राधान्येनोक्तम्। मध्येन तूपास्यस्य स्वस्य तत्त्वञ्च तथोच्यते; तत्र षष्ठान्तनिर्द्दिष्टं तव भजनीयं रूपं कीदृशं, कथं वा भजतोऽन्तरात्मा तद्गतः स्यादित्येतत् पार्थेनापृष्टमपि कृपालुत्वेन स्वयमेव विवक्षुर्भगवानुवाच-मयीति। व्याख्यात-लक्षणे स्वोपास्ये मय्यासक्तमतिमात्रनिरतं मनो यस्य स त्वमन्यो वा तादृशो मदाश्रयो मद्दास्यसख्याद्येकतमेन भावेन मां शरणं गतो योगं मच्छरणादिलक्षणं युञ्जन् कर्त्तुं प्रवृत्तः। असंशयं यथा स्यात्तथा-कृष्ण एव परं तत्त्वमतोऽन्यद्वेति सन्देहशून्यो मत्पारतम्यनिश्चयवानित्यर्थः। समग्रं साधिष्ठानं सविभूतिं सपरिकरं च मां सर्व्वेश्वरं येन ज्ञानेन ज्ञास्यसि तन्मयोच्यमान-मवहितमनाः शृणु। हे पार्थ! न च समग्रमिति कार्त्स्न्येन स ज्ञानमादिशतीति वाच्यमनन्तस्य तस्य तथाज्ञानासम्भवात्।

स्मृतिश्च–"कार्त्स्न्येन नाजोऽप्यभिधातुमीशः" इति ॥१॥

**ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।**
**यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥२॥**

सारा०ब०—तत्र मद्भक्तेरासक्तिभूमिकातः पूर्व्वमपि मे ज्ञानमैश्वर्य्यमयं भवेत्। तदुत्तरं विज्ञानं माधुर्य्यानुभवमयं भवेत्। तदुभयमपि त्वं शृणिवत्याह—ज्ञानमिति। अन्यज्ज्ञातव्यं नावशिष्यत इति मन्निर्व्विशेषब्रह्मज्ञानविज्ञाने अप्येतदन्तर्भूत एवेत्यर्थः ॥ २ ॥

गी०भू०—वक्ष्यमाणं ज्ञानं स्तौति–ज्ञानमिति—इदं चिदचिच्छक्तिमत्स्वरूपविषयकं ज्ञानं, तच्च सविज्ञानं वक्ष्यामि। तच्छक्तिद्वयविविक्तस्वरूपविषयकं ज्ञानं विज्ञानं तेन सहितं ते तुभ्यं प्रपन्नायाशेषतः सामग्र्येणोपदेक्ष्यामीत्यर्थः। यत्स्वरूपं सर्व्वकारणं यच्च ध्येयं तदुभयविषयकं ज्ञानमत्र वक्तुं प्रतिज्ञातं यज्ज्ञानं ज्ञात्वेह श्रेयोवर्त्मनि निविष्टस्य जिज्ञासोस्तवान्यज्ज्ञातव्यं नावशिष्यते, सर्व्वस्य तदन्तर्भावात् ॥२॥

**मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।**
**यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥३॥**

सारा०ब०—एतच्च सविज्ञानं मज्ज्ञानं पूर्व्वमध्यायषट्के प्रोक्तलक्षणैर्ज्ञानिभिर्योगिभिरपि दुर्लभमिति वदन् प्रथमं विज्ञानमाह–मनुष्याणामिति। असंख्यातानां जीवानां मध्ये कश्चिदेव मनुष्यो भवति। मनुष्याणां सहस्रेषु मध्ये कश्चिदेव श्रेयसि यतते। तादृशानामपि मनुष्याणां सहस्रेषु कश्चिदेव मां श्यामसुन्दराकारं तत्त्वतो वेत्ति साक्षादनुभवतीति निर्व्विशेषब्रह्मानुभवानन्दात् सहस्रगुणाधिकः सविशेषब्रह्मानुभवानन्दः स्यादिति भावः ॥ ३ ॥



गी०भू०—स्वज्ञानस्य दौर्लभ्यमाह–मनुष्याणामिति। उच्चावचदेहात्मसंख्याता जीवास्तेषु कतिचिदेव मनुष्यास्तेषां शास्त्राधिकारयोग्यानां सहस्रेषु मध्ये कश्चिदेव सत्प्रसङ्गवशात् सिद्धये स्वपरात्मावलोकनाय यतते, न तु सर्व्वः। तादृशानां यततां यतमानानां सिद्धानां लब्धस्वपरात्मावलोकनानां सहस्रेषु मध्ये कश्चिदेवैको मां कृष्णं तत्त्वतो वेत्ति। अयमर्थः–शास्त्रीयार्थानुष्ठायिनो बहवो मनुष्याः परमाणुचैतन्यं स्वात्मानं प्रादेशमात्रं मत्स्वांशं परमात्मानं चानुभूय विमुच्यन्ते। मां तु यशोदास्तनन्धयं कृष्णमधुना त्वत्सारथिं कश्चिदेव तादृशसत्प्रसङ्गावाप्तमद्भक्तिस्तत्त्वतो याथात्म्येन वेत्ति–अविचिन्त्यानन्तशक्तिकत्वेन निखिलकारणत्वेन सार्व्वज्ञ्यसार्व्वैश्वर्य्यस्वभक्तवात्सल्याद्यसंख्येयकल्याणगुणरत्नाकरत्वेन पूर्णब्रह्मत्वेन चानुभवतीत्यर्थः। वक्ष्यति च–"स महात्मा सुदुर्लभः", "मान्तु वेद न कश्चन" इति ॥३

**भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।**
**अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥४॥**

सारा०ब०—अथ भक्तिमते ज्ञानं नाम भगवदैश्वर्य्यज्ञानमेव, न तु देहाद्यतिरिक्तात्मज्ञानमेवेति। अतः स्वीयैश्वर्य्यज्ञानं निरूपयन् परापरभेदेन स्वीयप्रकृतिद्वयमाह—भूमिरिति द्वाभ्याम्। भूम्यादिशब्दैः पञ्चमहाभूतानि सूक्ष्मभूतैर्गन्धादिभिः सहैकीकृत्य संगृह्यन्ते, अहङ्कार–शब्देन तत्कार्य्यभूतानीन्द्रियाणि; तत्कारणभूत--महत्तत्त्वमपि गृह्यते, बुद्धिमनसोः पृथगुक्तिस्तत्त्वेषु तयोः प्राधान्यात् ॥ ४ ॥

गी०भू०—एवं श्रोतारं पार्थमभिमुखीकृत्य स्वस्य कारणस्वरूपं चिदचिच्छक्तिमद्वक्तुं ते शक्ती प्राह–भूमिरिति द्वाभ्याम्। चतुर्व्विंशतिधा प्रकृतिर्भूम्याद्यात्मनाष्टधा भिन्ना मे मदीया बोध्या तन्मात्रादीनां भूम्यादिष्वन्तर्भावादिहापि चतुर्व्विंशति-

धैबाबसेया। तत्र भूम्यादिषु पञ्चसु भूतेषु तत्कारणानां गन्धानां पञ्चानां तन्मात्राणामन्तर्भावः ; अहङ्कारे तत्कार्य्याणामेकादशानामिन्द्रियाणाम् ; 'बुद्धि'शब्दो महत्तत्त्वमाह ; मनःशब्दस्तु मनोगम्यमव्यक्तरूपं प्रधानमिति । श्रुतिश्चैवमाह–"चतुर्विंशतिसंख्यानां अव्यक्तं व्यक्तमुच्यते" इति । स्वयञ्च क्षेत्राध्याये वक्ष्यति–"महाभूतान्यहङ्कारः" इत्यादिना ॥४॥

**अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।**
**जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥५॥**

सारा०ब०—इयं प्रकृतिर्बहिरङ्गाख्या शक्तिरपरानुत्कृष्टा जड़त्वात् । इतोऽन्यां प्रकृतिं तटस्थां शक्तिं जीवभूतां परामुत्कृष्टां विद्धि चैतन्यत्वात् । अस्या उत्कृष्टत्वे हेतुः—यया चेतनया इदं जगत् चेतनं धार्य्यते स्वभोगार्थं गृह्यते ॥ ५ ॥

गी०भू०—एषा प्रकृतिरपरा निकृष्टा जड़त्वाद्भोग्यत्वाच्चेतो जड़ायाः प्रकृतेरन्यां परां चेतनत्वाद्भोक्तृत्वाच्चोत्कृष्टां जीवभूतां मदीयां प्रकृतिं विद्धि । हे महाबाहो पार्थ ! परत्वे हेतुः–ययेति । यया चेतनया इदं जगत् स्वकर्म्मद्वारा धार्य्यते शय्यासनादिवत् स्वभोगाय गृह्यते ; श्रुतिश्च हरेरेवेयं शक्तिस्त्रयीत्याह—"प्रधानक्षेत्रज्ञपतिर्गुणेशः" इति ॥५॥

**एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।**
**अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥६॥**

सारा०ब०—एतच्छक्तिद्वयद्वारैव स्वस्य जगत्कारणत्वमाह–एतदिति । एते मायाशक्तिजीवशक्ती क्षेत्र-क्षेत्रज्ञ-रूपे योनी कारणभूते येषां तानि स्थावरजङ्गमात्मकानि भूतानि जानीहि । अतः कृत्स्नस्य सर्व्वस्यास्य जगतः प्रभवो मच्छक्तिद्वयप्रभूतत्वात्



अहमेव स्रष्टा, प्रलयतच्छक्तिमति मय्येव प्रलीनभावित्वादहमेवास्य संहर्त्ता ॥ ६ ॥

गी०भू०—एतच्छक्तिद्वयद्वारैव सर्व्वजगत्कारणतां स्वस्याह–एतदिति । सर्व्वाणि स्थिरचराणि भूतान्येतद्योनीनि उपधारय बिद्धि । एतेऽपरपरे क्षेत्रक्षेत्रज्ञशब्दबाच्ये मच्छक्ती योनी कारणभूते येषां तानीत्यर्थः । ते च प्रकृती मदीये मत्त एव सम्भूते । अतः कृत्स्नस्य सप्रकृतिकस्य जगतोऽहमेव प्रभव उत्पत्तिहेतुः–'प्रभवत्यस्मात्' इति व्युत्पत्तेः तस्य प्रलयसंहर्त्ताप्यहमेव–'प्रलीयतेऽनेन' इति व्युत्पत्तेः ॥६॥

**मत्तः परतरं नान्यत्किञ्चिदस्ति धनंजय ।**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥७॥**

सारा०ब०—यस्मादेवं तस्मादहमेव सर्व्वमित्याह—मत्तः परतरमन्यत् किञ्चिदपि नास्ति कार्य्य--कारणयोरैक्यात् शक्तिशक्तिमतोरैक्याच्च । तथा च श्रुतिः—"एकमेवाद्वितीयं ब्रह्म", "नेह नानास्ति किञ्चन" इति । एवं स्वस्य सर्व्वात्मकत्वमुक्त्वा सर्व्वान्तर्यामित्वाञ्चाह—मयीति । सर्व्वमिदं चिज्जड़ात्मकं जगत् मत्कार्य्यत्वात् मदात्मकमपि पुनर्मय्यन्तर्य्यामिनि प्रोतं ग्रथितं यथा सूत्रे मणिगणाः प्रोताः । मधुसूदन-सरस्वतीपादास्तु सूत्रे मणिगणा इवेति दृष्टान्तस्तु ग्रथितत्वमात्रे, न तु कारणत्वे कनके कुण्डलादिवदिति तु योग्यो दृष्टान्त इत्याहुः ॥ ७ ॥

गी०भू०—ननु स्थिरचरयोरपरपरयोः प्रकृत्योरपि त्वमेव तच्छक्तिमान् योनिरित्युक्तेर्निखिलजगद्बीजत्वं तव प्रतीतं, न तु सर्व्वपरत्वम् ; तच्च तद्बीजात्त्वत्तोऽन्यस्यैव–"ततो यदुत्तरतरं तदरूपमनामयं य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापि यन्ति" इति श्रवणादिति चेत्त्राह–मत्त इति । मत्तोऽत्वत्सखात्

कृष्णात् परतरं श्रेष्ठमन्यत् किञ्चिदपि नास्त्यहमेव सर्व्वश्रेष्ठं वस्त्वित्यर्थः। ननु "ततो यदुत्तरतरम्" इत्यादावन्यथा श्रुतमिति चेन्मन्दमेतत् क्षोदाक्षमत्वात्; तथा हि "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्। तमेव विद्वानमृत इह भवति नान्यः पन्था विद्यते अयनाय" इति श्वेताश्वतरैः सर्व्वजगद्बीजस्य महापुरुषस्य विष्णोर्ज्ञानममृतस्य पन्थास्ततो नास्तीत्युपदिश्य तदुपपादनाय "यस्मात् परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित्" इति तस्यैव परतमत्वं तदितरस्य तदसंभवञ्च प्रतिपाद्य, "ततो यदुत्तरतरम्" इत्यादिना पूर्व्वोक्तमेव निगमितम्; न तु ततोऽन्यच्छ्रेष्ठमस्तीति उक्तम्-तथा सति तेषां मृषावादित्वापत्तेः। एवमाह सूत्रकारः—"तथान्यप्रतिषेधात्" इति। मदन्यस्य कस्यचिदपि श्रेष्ठ्याभावादहमेव मदन्यसर्व्वाश्रय इत्याह—मयीति। प्रोतं ग्रथितं स्फुटमन्यत्-एतेन विश्वपालकत्वं स्वस्योक्तम् ॥७॥

रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥८॥

सारा०ब०—स्वकार्य्ये जगत्यत्र यथाहमन्तर्यामिरूपेण प्रविष्टो वर्त्ते, तथा क्वचित् कारणरूपेण क्वचित् कार्य्येषु मनुष्यादिषु साररूपेणाप्यहं वर्त्ते इत्याह—रसोऽहमिति चतुर्भिः। अप्सु रसस्तत् कारणभूतो मद्विभूतिरित्यर्थः। एवं सर्व्वत्रापि प्रभारूपः प्रणवः 'ओंकारः'—सर्व्ववेदकारणम्। खे आकाशे शब्दस्तत्कारणं, नृषु पौरुषं सफल उद्गमविशेष एव मनुष्यसारः ॥ ८ ॥

गी०भू०—तत्त्वं दर्शयति-रसोऽहमिति पञ्चभिः। अप्सु रसोऽहं रसतन्मात्रया विभूत्या ताः पालयन् तास्वहं वर्त्ते,



तां विना तासामस्थितेः। शशिनि सूर्य्ये चाहं प्रभास्मि प्रभया विभूत्या तौ पालयन् तयोरहं वर्त्ते; एवं परत्र द्रष्टव्यम्। वैखरीरूपेषु सर्व्ववेदेषु तन्मूलभूतः प्रणवोऽहम्, खे नभसि शब्दस्तन्मात्रलक्षणोऽहम्, नृषु पौरुषं फलवानुद्यमोऽहम्-तेनैव तेषां स्थितेः ॥८॥

पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥९॥

सारा०ब०—"पुण्योऽविकृतो गन्धः पुण्यस्तु चार्व्वपि" इत्यमरः। च-कारो रसादीनामपि पुण्यत्वसमुच्चयार्थः। तेजः सर्व्ववस्तुपाचनप्रकाशनशीतत्राणादिसामर्थ्यरूपः सारः; जीवनमायुरेव सारः, तपो द्वन्द्वसहनादिकमेव सारः ॥ ९ ॥

गी०भू०—पुण्योऽविकृतो गन्धस्तन्मात्रलक्षणः, चकारो रसादीनामहमपि पुण्यत्वसमुच्चायकः। विभावसौ वह्नौ तेजः सर्व्ववस्तुपचनप्रकाशनादिसामर्थ्यरूपञ्च शदाद्रायौ यः पुण्यः स्पर्श उष्णस्पर्शव्याकुलानामापायकः सोऽहमिति बोध्यम्। जीवनमायुस्तपो द्वन्द्वसहनम् ॥९॥

बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम्।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १० ॥

सारा०ब०—बीजमविकृतं कारणं प्रधानाख्यमित्यर्थः। सनातनं नित्यं बुद्धिमतां बुद्धिरेव सारः ॥ १० ॥

गी०भू०—सर्व्वभूतानां चराचराणां यदेकबीजं सनातनं नित्यं, न तु प्रतिव्यक्तिभिन्नमनित्यं वा तत् प्रधानाख्यं सर्व्वबीजं मामेव विद्धि तद्रूपया विभूत्या तान्यहं पालयामि तत्परेण हि तानि पुष्यन्ते। बुद्धिः सारासारविवेकवती, तेजः प्रागल्भ्यं

पराभिभवसामर्थ्यं परानभिभाव्यत्वञ्च ॥१०॥

बलं बलवतां चाहं कामरागविवर्जितम् ।
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ । ११ ।

साराॱबॱ—कामः स्वजीविकाद्यभिलाषः, रागः क्रोधस्तद्विवर्जितम्, न तद्द्वयोत्थमित्यर्थः। धर्म्माविरुद्धः स्वभार्य्यायां पुत्रोत्पत्तिमात्रोपयोगी ॥ ११ ॥

गीॱभूॱ-कामः स्वजीविकाद्यभिलाषः रागस्तु प्राप्तेऽप्यभिलषितेऽर्थे पुनस्ततोऽप्यधिकेऽर्थे चित्तरञ्जनात्मकोऽतितृष्णापरनामा, ताभ्यां विवर्जितं बलं स्वधर्म्मानुष्ठानसामर्थ्यमित्यर्थः। धर्म्माविरुद्धः स्वपत्न्यां पुत्रोपत्तिमात्रहेतुः ॥११॥

ये चैव सात्त्विका भावा राजसास्तामसाश्च ये।
मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥ १२ ॥

साराॱबॱ—एवं वस्तुकारणभूता वस्तुसारभूताश्च राक्षसाद्याश्च विभूतयः काश्चिदुक्ताः; किन्त्वलमतिविस्तरेण। मदधीनं वस्तुमात्रमेव मद्विभूतिरित्याह—ये चैवेति। सात्त्विकभावाः शमदमादयो देवाद्याश्च, राजसा हर्षदर्पादयोऽसुराद्याश्च। तामसाः शोकमोहादयो राक्षसादयाश्च, तान् मत्त एवेति मदीयप्रकृतिगुणकार्य्यत्वात्। तेष्वहं न वर्त्ते, जीववत्तादधीनोऽहं न भवामीत्यर्थः। ते तु मयि मदधीनाः सन्त एव वर्त्तन्ते ॥ १२ ॥

गीॱभूॱ—एवं काश्चिद्विभूतिरभिधाय समासेन सर्व्वास्ताः प्राह ये चैवेति। ये मिथो विलक्षणस्वभावाः सात्त्विकादयो भावाः प्राणिनां शरीरेन्द्रियविषयात्मना तत्कारणत्वेन चावस्थितास्तान् सर्व्वान् तत्तच्छक्त्युपेतान्मत्त एवोपपन्नान् विद्धि। न त्वहं तेषु वर्त्ते नैवाहं तदधीनस्थितिः-ते मयि मदधीनस्थितय इत्यर्थः ॥१२॥



त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत्।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ १३ ॥

साराॱबॱ--नन्वेवम्भूतं त्वां परमेश्वरं कथमयं जनो न जानातीत्यत आह—त्रिभिरिति। गुणमयैः शमदमादि-हर्षादि-शोकाद्यैर्भावैः स्वाभावीभूतैर्ज्जगत् जगज्जात-जीववृन्दं मोहितं सत् मां निर्गुणत्वादेभ्यः परमव्ययं निर्व्विकारम् ॥ १३ ॥

गीॱभूॱ—अथ शक्तिद्वयविविक्तं स्वस्य ध्येयस्वरूपं दर्शयन् तस्याज्ञाने तदासक्तिमेव हेतुमाह-त्रिभिरिति। एभिः पूर्व्वोदितैर्गुणमयैर्मन्मायागुणकार्य्यैस्त्रिविधैः सात्त्विकादिभिर्भावैर्भवनधर्म्मिभिः क्षणपरिणामिभिरतत्तात्कर्म्मानुगुणशरीरेन्द्रियविषयात्मनावस्थितैर्मोहितमविवेकितां नीतं सत् सर्व्वमिदं जगत् सुरासुरमनुष्याद्यात्मनावस्थितं जीववृन्दं कर्त्तृ एभ्यः सात्त्विकादिभ्यो भावेभ्यः परं तैरस्पृष्टमनन्तकल्याणगुणरत्नाकरं विज्ञानानन्दघनं सर्व्वेश्वरमव्ययमप्रच्युतस्वभावं मां कृष्णं नाभिजानाति प्रत्युतासूयति ॥१३॥

दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥१४॥

साराॱबॱ--ननु तर्हि त्रिगुणमयमोहात् कथमुत्तीर्णा भवन्ति? तत्राह—दैवी विषयानन्देन दीव्यन्तीति देवा जीवास्तदीया तेषां मोहयित्रीत्यर्थः। गुणमयी श्लेषेण त्रिवेष्टनमहापाशरूपा। मम परमेश्वरस्य माया बहिरङ्गाशक्तिर्दुरत्यया दुरतिक्रमा। पाशपक्षे, छेत्तुम उद्ग्रन्थयितुं वा केनाप्यशक्येत्यर्थः। किन्तु मद्भाचि विश्वसिहि इति स्ववक्षः स्पृष्ट्वाह—मां श्यामसुन्दराकारमेव ॥ १४ ॥

गी०भू०—ननु त्रिगुणायास्तन्मायाया नित्यत्वात्तद्धेतुकस्य मोहस्य बिनिबृत्तिर्दु र्घटेति चेत्तत्राह—दैवीति। मम सर्व्वेश्वरस्यावितर्क्यातिबिचित्रानन्तविश्वस्रष्टुरेषा माया दैवी। अलौकिकत्यद्भुतेत्यर्थः, तादृक् विश्वसर्गोपकरणत्वात्। श्रुतिश्चैवमाह—"मायां तु प्रकृतिं बिद्यान्मायिनं तु महेश्वरमि"त्याद्या। गुणमयी सत्वादिगुणत्रयात्मिका,श्लेषेण त्रिगुणिता रज्जुरिवातिदृढतया जीवानां वन्धुहेतुः। अतो दुरत्यया तेषां दुरतिक्रमा, रज्जुपक्षे च्छेत्तुमुद्ग्रथितुं च तैरशक्येत्यर्थः। यद्यप्येतादृशी तथापि मद्भक्त्या तद्विनिवृत्तिः स्यादित्याह मामिति। मां सर्व्वेश्वरं मायानियन्तारं स्वप्रपन्नवात्सल्यनीरधिं कृष्णं ये तादृशसत्प्रसङ्गात् प्रपद्यते शरणं गच्छन्ति ते एतामर्णवमिवापारां मायां गोष्पदोदकाञ्जलिमिवाश्रमेण तरन्ति। तां तीर्त्वानन्दैकरसं प्रसादाभिमुखं स्वस्वामिनं मां प्राप्नुवन्तीति। मामेवेत्येवकारो मदन्येषां विधिरुद्रादीनां प्रपत्त्या तस्यास्तरणं नेत्याह श्रुतिश्चैवमाह तमेव विदित्वेत्याद्या,मुचुकुन्दं प्रति देवाश्च—"वरं वृणीष्व भद्रं ते ऋते कैवल्यमद्य नः। एक एवेश्वरस्तस्य भगवान् विष्णुरव्यय इति। घण्टाकर्णं प्रति शिवश्च—"मुक्तिप्रदाता सर्व्वेषां विष्णुरेव न संशयः" इति ॥१४॥

**न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः।**
**माययापहृतज्ञाना आसुरं भावमाश्रिताः ॥१५॥**

सारा०ब०--ननु तर्हि पण्डिता अपि केचित् किमिति त्वां न प्रपद्यन्ते ? तत्र ये पण्डितास्ते मां प्रपद्यन्त एब; पण्डितमानिन एब न मां प्रपद्यन्त इत्याह--न मामिति। दुष्कृतिनः दुष्टाश्च ते कृतिनः पण्डिताश्चेति ते कुपण्डिता इत्यर्थः। ते च चतुर्व्विधाः--एके मूढ़ाः पशुतुल्याः कर्म्मिणः; यदुक्तं--"ननु



दैवेन निहता ये चाच्युतकथासुधाम्। हित्वा शृण्वन्त्यसद्गाथाः पुरीषमिव विड्भुजः॥" इति, "मुकुन्दं को वै न सेवेत विना नरेतरम्" इति च। अपरे नराधमाः कञ्चित् कालं भक्तिमत्त्वेन प्राप्तनरत्वा अप्यन्ते फलप्राप्तौ न साधनोपयोग इति मत्वा स्वेच्छयैब भक्तित्यागिनः—स्वकर्त्तृकभक्तित्यागलक्षणमेव तेषामधमत्वमिति भावः। अपरे शास्त्राध्यापनादिमत्त्वेऽपि माययापहृतं ज्ञानं येषां ते। वैकुण्ठबिराजिनी नारायणमूर्त्तिरेव सार्व्वकालिकीभक्तिप्राप्या, न तु कृष्णरामादिमूर्त्तिर्मानुषीति मन्यमाना इत्यर्थः, यद्वक्ष्यते,—"अवजानन्ति मां मूढ़ा मानुषीं तनुमाश्रितम्" इति। ते खलु मां प्रपद्यमाना अपि न मां प्रपद्यन्त इति भावः। अपरे आसुरं भावमाश्रिताः। असुराः जरासन्धादयः मद्विग्रहं लक्ष्यीकृत्य शरैर्विद्धयन्ति। तथैब दृश्यत्वादिहेतुमत्-कुतर्कैर्मद्बिग्रहं वैकुण्ठस्थमपि खण्डयन्त्येब, न तु प्रपद्यन्त इत्यर्थः॥ १५॥

गी०भू०-ननु चेत्त्वामेव प्रपन्ना विमुच्यन्ते तर्हि पण्डिता अपि केचित् किमिति त्वां न प्रपद्यन्ते तत्राह न मामिति। दुष्टाश्च ते कृतिनः शास्त्रार्थकुशलाश्चेति दुष्कृतिनः कुपण्डितास्ते मां न प्रपद्यन्ते। श्रुतिश्चैवमाह-"अविद्यायामन्तरे वर्त्तमानाः स्वयं धीराः पण्डितम्मन्यमानाः।दंद्रम्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः" इति। ते चतुर्विधाः- एके मायया मूढ़ाः कर्म्मजडा इन्द्रादिवन्मामपि विष्णुं कर्म्माङ्गं जीबवत् कर्म्माधीनं मन्यमानाः, अपरे मायया नराधमा विप्रादिकुलजन्मना नरोत्तमतां प्राप्याप्यसत् काव्यार्थासक्त्या पामरताभाजः। यदुक्तं—"नूनं दैवेन निहता ये चाच्युतकथासुधाम्। हित्वा शृण्वन्त्यसद्गाथा पुरीषमिव बिड्भुज"इति। अन्ये माययापहृतज्ञानाः सांख्यादयः ते हि सार्व्वज्ञसार्व्वैश्वर्य्यसर्व्वस्रष्टृत्व-मुक्तिदत्वादि धर्म्मैः

श्रुतिसहस्रप्रसिद्धमपि मामीश्वरमपलपन्तः प्रकृतिमेव सर्व्वस्रष्ट्रीं मोक्षदात्रीं च कल्पयन्ति। तत्र तादृशकुटिलकुयुक्तिशतान्युद्भावयन्ती मायैव हेतुः। केचित्तु मायर्यैवासुरं भावमाश्रिता निर्व्विशेषचिन्मात्रबादिनः-असुरा यथा निखिलानन्दकरं मद्विग्रहं शरैर्बिध्यन्ति तथादृश्यत्वादिहेतुभिस्ते नित्यचैतन्यात्मतया श्रुतिप्रसिद्धमपि तं खण्डयन्तीति तत्रापि तादृशबुद्ध्युत्पादनी मायैव हेतुरिति ॥१५॥

**चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन।**
**आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥१६॥**

साराःबः—तर्हि के त्वां भजन्त इत्यत आह—चतुर्व्विधा इति। सुकृतं बर्णाश्रमाचारलक्षणो धर्म्मस्तद्बन्तः सन्तो मां भजन्ते; तत्र आर्त्तो—रोगाद्यापद्ग्रस्तस्तन्निवृत्तिकामः, जिज्ञासुः आत्मज्ञानार्थी व्याकरणादिशास्त्रज्ञानार्थी बा, अर्थार्थी द्विति-गजतुरगकामिनीकनकाद्यैहिकपारत्रिकभोगार्थीति,-एते त्रयः, सकामा गृहस्थाः, ज्ञानी बिशुद्धान्तःकरणः सन्न्यासीति चतुर्थोऽयं निष्कामः, इत्येते प्रधानीभूत-भक्त्यधिकारिणश्चत्वारो निरूपिताः। तत्रादिमेषु त्रिषु कर्म्ममिश्रा भक्तिः, अन्तिमे चतुर्थे ज्ञानमिश्रा, "सर्व्वद्वाराणि संयम्य" इत्यग्रिमग्रन्थे योगमिश्रापि बक्ष्यते। ज्ञानकर्म्माद्यमिश्रा केवला भक्तिर्या सा तु सप्तमाध्यारम्भे एब "मय्यासक्तमनः पार्थ" इत्यनेन उक्ता। पुनश्चाष्टमेऽप्यध्याये "अनन्यचेताः सततम्" इत्यनेन, नबमे "महात्मानस्तु मां पार्थ' इति श्लोकद्वयेन "अनन्याश्चिन्तयन्तो माम्" इत्यनेन च निरूपयितव्येति। 'प्रधानीभूता' 'केवला' इति द्विविधैव भक्तिर्मध्यमेऽस्मिन्नध्यायषट्के भगवतोक्ता। या तु तृतीया गुणीभूता भक्तिः कर्म्मिणि, ज्ञानिनि, योगिनि च कर्म्मादि-



फलसिद्ध्यर्था दृश्यते, तस्याः प्राधान्याभावात् न भक्तित्वव्यपदेश', किन्तु तत्र तत्र कर्म्मादीनामेव प्राधान्यात्। प्राधान्येन व्यपदेशा भबन्ति' इति न्यायेन कर्म्मत्व-ज्ञानत्व-योगत्व-व्यपदेशः, तद्वतामपि कर्म्मित्वज्ञानित्वयोगित्व-व्यपदेशः, न तु भक्तत्व-व्यपदेशः। फलञ्च सकामकर्म्मणः स्वर्गः निष्कामकर्म्मणो ज्ञानयोगो ज्ञानयोगयोर्निर्व्वाणमोक्ष इति। अथ द्विधाया भक्तेः फलमुच्यते, तत्र प्रधानीभूतासु भक्तिषु मध्ये आर्त्तादिषु त्रिषु याः कर्म्ममिश्रास्तिस्रः सकामा भक्तयस्तासां फलं तत्तत्कामप्राप्तिः, बिपर्य्यसादुगुणत्वात् तदन्ते सुखैश्वर्य्यप्रधानसालोक्यमोक्षप्राप्तिश्च; न तु कर्म्मफलस्वर्गभोगान्त इव पातः, यद्वक्ष्यते,-"यान्ति मद्याजिनो माम्" इति। चतुर्थ्या ज्ञानमिश्रायास्तत उत्कृष्टायास्तु फलं शान्तरतिः सनकादिष्विब। भक्तभगबत्कारुण्याधिक्यवशात् कस्याश्चित् तस्याः फलं प्रेमोत्कर्षश्च श्रीशुकादिष्बिव। कर्म्ममिश्रा भक्तिर्यदि निष्कामा स्यात् तदा तस्याः फलं ज्ञानमिश्रा भक्तिः, तस्याः फलमुक्तमेब। कश्चिच्च स्वभावादेव दासादिभक्तसङ्गोत्थ-बासना बशाद्वा ज्ञानकर्म्मादिमिश्रभक्तिमतामपि दास्यादिप्रेमा स्यात्, किन्तु ऐश्वर्य्यप्रधानमेवेति। अथ ज्ञानकर्म्माद्यमिश्रायाः शुद्धाया अनन्याकिञ्चनोत्तमादिपर्य्यायाः भक्तेर्बहुप्रभेदाया दास्यसख्यादिप्रेमवत् पार्षदत्वमेव फलमित्यादिकं श्रीभागवतटीकायां बहुशः प्रतिपादितम्। अत्रापि प्रसङ्गबशात् साध्य—भक्तिबिवेकः संक्षिप्य दर्शितः ॥ १६ ॥

गीःभूः—तर्हि त्वां के प्रपद्यन्ते तत्राह चतुर्व्विधा इति। सुकृतिनः सुपण्डिताः स्ववर्णाश्रमोचितकर्म्मणा मदेकान्तिभावेन च सम्पन्ना जना मां भजन्ते। ते च चतुर्व्विधाः-तत्रार्त्तः शत्रुक्लेशाद्यापद्ग्रस्तस्तद्विनाशेच्छुर्गजेन्द्रादिः, जिज्ञासुर्बिविक्तात्मस्वरूपज्ञानेच्छुः शौनकादिः, अर्थार्थी राज्यादिसम्पादनेच्छु ध्रुवादिः, ज्ञानी

शेषत्वेन स्वात्मानं शेषित्वेन परात्मानञ्च मां ज्ञातवान् शुकादिः। एष्वार्त्तादयः सकामाः ज्ञानी तु निष्कामः। आर्त्तार्थार्थिनोः परत्र जिज्ञासुता-सम्पत्तये तयोरन्तराले जिज्ञासोरुपन्यासः ॥१६

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥१७॥

सारा०व०—चतुर्णां भक्त्यधिकारिणां मध्ये कः श्रेष्ठः इत्यपेक्षायामाह—तेषां मध्ये ज्ञानी विशिष्यते श्रेष्ठः। नित्ययुक्तो नित्यं मयि युज्यत इति सः ज्ञानाभ्यासवशीकृत-चित्तात्वान्मनस्यैकाग्रचित्त इत्यर्थः। आर्त्ताद्यास्त्रयस्तु नैवम्भूता इति भावः। ननु सर्व्वोऽपि ज्ञानी ज्ञानवैयर्थ्यभयात् त्वां भजते एव? तत्राह—एका मुख्या प्रधानीभूता भक्तिरेव, न तु अन्येषां ज्ञानिनामिव ज्ञानमेव प्रधानीभूतं यस्य सः, यद्वा—एका भक्तिरेव तथैवासक्तिमत्त्वात् यस्य स नाममात्रेणैव ज्ञानीति भावः। एवम्भूतस्य ज्ञानिनोऽहं श्यामसुन्दराकारोऽत्यर्थमतिशयेन प्रियः साधनसाध्यदशयोः परिहातुमशक्यः। "ये यथा मां प्रपद्यन्ते" इति न्यायेन ममापि स प्रियः॥ १७॥

गी०भू—चतुर्षु ज्ञानिनः श्रेष्ठ्य-माह तेषामिति। ज्ञानी विशिष्यते श्रेष्ठो भवति, यदसौ नित्ययुक्त एकभक्तिश्च। आर्त्तिविनाशादि कामनाविरहान्नित्यं मया योगवान्। आर्त्तादेस्तु यावत्कामितप्राप्ति मद्योग एकस्मिन् मय्येव ज्ञानिनो भक्तिरार्त्तादेस्तु स्वकामिते तत्प्रदातृत्वेन मयि चातो ज्ञानी ततः श्रेष्ठः। अतृप्यन्नाह—प्रियो हीति। ज्ञानिनो ह्यहमत्यर्थं प्रियः प्रेमास्पदम्, सहि मत्प्रियतासुधासिन्धुनिमग्नो नान्यत् किञ्चिदनुसन्धत्ते तस्य मत्प्रियतापरिमितेति बोधयितुमत्यर्थशब्दः, सर्व्वज्ञोऽनन्तशक्तिश्चाहं यां वक्तुं न शक्नोमीत्यर्थः। सच ज्ञानी ये यथा मामित्यादि न्यायेन तथैव



मम प्रियः, ममापि तत् प्रियता तद्वदपरिमितेत्यर्थः ॥१७॥

उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥१८॥

सारा०व०—तर्हि किमार्त्ताद्यास्त्रयस्तव न प्रियास्तत्र न हि, न हीत्याह—उदारा इति। ये मां भजन्ते मत्तः किञ्चित् कामितं मयापि दित्सितं गृह्णन्ति, ते भक्तवत्सलाय मह्यं बहु प्रदायिनः प्रिया एवेति भावः। ज्ञानी त्वात्मैवेति, स हि भजन्नथ च मत्तः किमपि स्वर्गापवर्गादिकं नाकाङ्क्षत इति, अतस्तदधीनस्य मम स आत्मैवेति मम मतं मति, यतः स मां श्यामसुन्दराकारमेवानुत्तमां सर्व्वोत्तमां गतिं प्राप्यास्थितः निश्चितवान्; न तु मम निर्व्विशेषस्वरूपब्रह्मनिर्व्वाणमिति भावः। एवञ्च निष्कामप्रधानीभूतभक्तिमान् ज्ञानी भक्तवत्सलेन भगवता स्वात्मत्वेनाभिमन्यते, केवलभक्तिमाननन्यस्तु आत्मनोऽप्याधिक्येन। यदुक्तं—"न तथा मे प्रियतम आत्मयोनिर्न शङ्करः। न च सङ्कर्षणो न श्रीर्नैवात्मा च यथा भवान्॥" इति, "नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना" इति, "आत्मारामोऽप्यरीरमत्" इत्यादि ॥ १८॥

गी०भू०—नन्वार्त्तादयस्तव प्रिया न भवन्ति मैवमत्यर्थमिति विशेषणादित्याह उदारा इति। सर्व्वे एवैते आर्त्तादय उदारा वदान्याः। "उदारो दातृमहतोरि"त्यमरः। ये मां भजन्तो मया दित्सितं किञ्चित् स्वाभीष्टं मत्तो गृह्णन्ति ते भक्तवात्सल्यं मह्यं प्रयच्छन्तो मम बहु प्रदाः प्रिया एवेति भावः। ज्ञानी तु ममात्मैवेति मतम्। हि यस्मात् स ज्ञानी युक्तात्मा मदर्पितमना मत्तोऽन्यत् किञ्चिदप्यनिच्छन्नतिप्रियेण मया बिना लवमपि स्थातुमसमर्थो मामेव सर्व्वोत्तमां गतिं प्राप्यमास्थितः निश्चितवान् अतस्तेन ताह-

शेन बिना लवमपि स्थातुमसमर्थस्य ममात्मैव सः। न च ज्ञानि-
जीवस्य हरिः स्वेनाभेदमाहेति बाच्यम्। ज्ञानिभजत्बासिद्धे-
र्भजतां चातुर्व्विध्यासिद्धे र्मोक्षे भेदबाक्यव्याकोपाच्च। तस्मा-
दतिप्रियत्वादेब तत्रात्मेत्युक्तिर्ममात्मा भद्रसेन इतिबत्। आत्मैब
मन एब मतमित्यपरे ॥१८॥

बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते।
बासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥१९॥

सारा०ब०—ननु मामेबानुत्तमां गतिमास्थित इति ब्रूषे
अतः स ज्ञानिभक्तस्त्वामेव प्राप्नोति, किन्तु कियतः समयाद-
नन्तरं स ज्ञानी भक्त्यधिकारी भबतीत्यत आह—बहूनामिति।
बासुदेबः सर्व्वमिति—सर्व्वत्र बासुदेवदर्शी ज्ञानवान् बहूनां
जन्मनामन्ते मां प्रपद्यते। तादृश—साधुर्यादृच्छिकसङ्गवशात्
मत्प्रपत्तिं प्राप्नोति, स च ज्ञानी भक्तो महात्मा सुस्थिरचित्तः
सुदुर्लभः—"मनुष्याणां सहस्रेषु" इति मदुक्तेः। ऐकान्तिक-
भक्तस्तु किमुतेति, स तु अति सुदुर्लभ एवेति भावः ॥ १९ ॥

गी०भू०—नन्वार्त्तादीनामन्ते का निष्ठेति चेत्तत्राह–बहूना-
मिति। आर्त्तादिस्त्रिविधो मद्भक्तः कृतमद्भक्तिमहिम्ना बहूनि जन्मा-
न्युत्तमान् बिषयानन्दाननुभूय तेषु वितृष्णोऽन्ते जन्मनि मत्स्वरूप-
ज्ञसत्प्रसङ्गात् ज्ञानबान् प्राप्तमत्स्वरूपज्ञानः सन् मां प्रपद्यते, ततो
विन्दतीत्यर्थः। ज्ञानाकारमाह–बासुदेवेति। बसुदेबसुतः कृष्ण
एब सर्व्वं-कृष्णायत्तस्वरूपस्थितिप्रबृत्तिकं सर्व्वं बस्त्वित्यर्थः। यद्धि
यदधीनस्वरूपस्थितिकं तत्तदात्मकं व्यपदिश्यते, यथा प्राणा-
धीनस्वरूपस्थितिकत्वात् प्राणरूपं बागादि ब्यपदिष्टं छान्दोग्ये–
"न वै बाचो न चक्षूंषि न श्रोत्राणि न मनांसीत्याचक्षते प्राण
इत्येबाचक्षते प्राणो ह्येवैतानि सर्व्वाणि भवन्ति" इति तत्राहुः–



सर्व्वं बस्तु बासुदेबेन ब्याप्यमतः सर्व्वं बासुदेब इत्यर्थः। "सर्व्वं
समाप्नोषि ततोऽसि सर्व्वम्" इति पार्थो बक्ष्यतीति। स हि
निखिलस्पृहानिबृत्तिपूर्व्वकं मत्स्पृहो मदात्मात्युदारमना मन्नि-
वेदितात्मा ज्ञानिकोटिष्वपि सुदुर्लभः। एष ज्ञानवान् 'प्रियो हि
ज्ञानिनोऽत्यर्थम्' इत्याद्युक्तलक्षणो बोध्यः ॥१९॥

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥२०॥

सारा०ब०—ननु आर्त्तादयः सकामा अपि भगवन्तं त्वां
भजन्तः कृतार्था इब इत्यबगतम्, ये तु आर्त्तादयः
आर्त्तिहानादिकामनया देबतान्तरं भजन्ते, तेषां का गतिरित्य-
पेक्षायामाह—कामैरिति चतुर्भिः। हृतज्ञाना इति रोगाद्यार्त्ति-
हराः शीघ्रं यथा सूर्य्यादयस्तथा न बिष्णुरिति नष्टबुद्धयः।
प्रकृत्येति स्वया प्रकृत्या नियता बशीकृताः सन्तस्तेषां दुष्टा
प्रकृतिरेब मत्प्रपत्तौ पराङ्मुखीति भावः ॥ २० ॥

गी०भू०—तदित्थं कामनयापि मां भजन्तो मद्भक्तिमहिम्ना
ते बिमुच्यन्त इत्युक्तम्। ये तु शीघ्रसुखकामा देबतान्तर-
भक्तास्ते संसरन्त्येवेत्याह–कामैरित्यादिभिश्चतुर्भिः। तैस्तैरार्त्ति-
बिनाशादिबिषयकैः कामैर्हृतज्ञाना यथादित्यादयः शीघ्रमेव रोग-
बिनाशादिकरास्तथा न बिष्णुरिति नष्टधिय इत्यर्थः। तं तम-
साधारणं स्वया प्रकृत्या बासनया नियता नियन्त्रितास्तेषां
प्रकृतिरेव तादृशी–या मत्प्रपत्तौ वैमुख्यं करोतीति भावः ॥२०॥

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव बिदधाम्यहम् ॥२१॥

सारा०ब०—ते ते देबाः पूजां प्राप्य प्रसन्नास्तेषां स्वस्व-

पूजकानां हितार्थं त्वद्भक्तौ श्रद्धामुत्पादयिष्यन्तीति मा बादीर्य-तस्ते देबाः स्वभक्तावपि श्रद्धामुत्पादयितुमशक्ताः किं पुनर्मद्भक्ता-बित्याह--यो य इति। यां यां तनुं सूर्य्यादिदेबरूपां मदीयां मूर्त्तिंबिभूतिमर्च्चितुं पूजयितुम्, तामेव तत्तद्देबताबिषयामेब, न तु स्वबिषयां श्रद्धामहमन्तर्यामेयेब बिदधामि, न तु सा सा देबता !! २१ ।।

गी०भू०—सर्व्वान्तर्यामी महाबिभूतिः सर्व्वहितेच्छुरहमेव तत्तद्देबतासु श्रद्धामुत्पाद्य ताः पूजयित्वा तत्तदनुरूपाणि फलानि प्रयच्छामि, न तु तासां तत्र तत्र शक्तिरस्तीत्याशयबानाह—य इति द्वाभ्याम्। यो य आर्त्तादिभक्तो यां यामादित्यादिरूपां मत्तनुं श्रद्धयार्च्चितुं बाञ्छति, तस्य तस्य तामेव तत्तद्देवता-बिषयामेव, न तु मद्बिषयाम्, अचलां स्थिराम्। बिदधाम्यु-त्पादयाम्यहमेव, न तु सा सा देबता, श्रुतिश्च तत्तद्देवतानां मत्तनुत्वमाह-"य आदित्ये तिष्ठत्यादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरम्" इत्याद्या ।।२१।।

स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान्मयैव विहितान्हि तान् ।।२२।।

सारा०ब०--ईहते करोति, स तत्तद्देवताराधनात् कामान् आराधनफलानि लभते। न च ते ते कामा अपि तैस्तैर्देवैः पूर्णाः कर्त्तुं शक्यन्त इत्याह--मयैव बिहितान् पूर्णीकृतान् ।।२२।।

गी०भू०—स तयेति। ईहते करोति, ततो मत्तनुभूत-तत्ता-द्देबताराधनात्। कामान् फलानि तत्र तत्रोक्तानि। मयैवेति विहि-तान् रचितान्—यद्यपि तस्य तस्याराधकस्य तथा ज्ञानं नास्ति तथापि मत्तनुबिषयेयं श्रद्धेत्यनुसन्धायाहं फलान्यर्पयामीति भावः ।।२२।।



अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि ।।२३।।

सारा०ब०--किन्तु तेषां देबतान्तरभक्तानां फलं तत्तद्देबता-राधनजन्यमन्तबत् नश्वरं कैश्चित्कालिकं भबति। ननु आराधने श्रमे तुल्येऽपि देबतान्तरभक्तानां फलं नश्बरं करोषि, स्वभक्तानान्त्व नश्वरं करोषीति त्वयि परमेश्वरेऽयमन्यायस्तत्र नायमन्याय इत्याह-देबानिति। देबयजो देबपूजकाः देबानेव यान्ति प्राप्नुबन्ति, मत्पूजका अपि माम्। अयमर्थः--ये हि यत्पूजकास्ते तान् प्राप्नुबन्त्येबेति न्याय एब। तत्र यदि देबा अपि नश्वरास्तदा तद्भक्ताः कथमनश्वरा भवन्तु, कथन्तरां बा तद्भजनफलं बा न नश्यतु, अतएव, तद्भक्ता अल्पमेधस उक्ताः। भगवांस्तु नित्यस्तद्भक्ता अपि नित्यास्तद्भक्तिर्भक्तिफलञ्च सर्व्वं नित्य-मेवेति ।। २३ ।।

गी०भू०—ननु देबाश्चेत् त्वत्तनवस्तर्हि देबभक्तानां तद्भक्तानां च समानं फलं स्यादिति चेत्तत्राह—अन्तबदिति। तेषामल्पमेधसा-मादित्यादिमात्रबुद्ध्या, न तु मत्तनुबुद्ध्याराधयतां तत्तत्फल-मल्पमन्तबद्बिनाशि च भबति, मत्तनुबुद्ध्याराधयतां तु फल-मनन्तमबिनाशि चेति भावः। यस्मादादित्यादिदेबयाजिनस्तान् स्वेज्यान् मितभोगान् मितायुषो यान्तीति, मद्भक्तास्तु मामेव नित्या-परिमितस्वरूपगुणबिभूतिमदाराधनफलमनन्तमबिनाशि चेति महदन्तरमित्यर्थः ।।२३।।

अव्ययं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ।।२४।।

सारा०ब०—देबतान्तरभक्तानामल्पमेधसां बार्त्ता दूरे ताबदा

स्ताम्, वेदादिसमस्तशास्त्रदर्शिनोऽपि मत्तत्त्वं न जानन्ति । "अथापि ते देव पदाम्बुजद्वयप्रसादलेशानुगृहीत एव हि । जानाति तत्त्वं भगवन्महिम्नो न चान्य एकोऽपि चिरं विचिन्वन् ।।" इति ब्रह्मणापि मां प्रत्युक्तम् । अतो मद्भक्तान् विना मत्तत्त्व-ज्ञाने सर्व्वत्र बाल्पबुद्धय इत्याह—अव्यक्तं प्रपञ्चातीतं निराकारं ब्रह्मैव मां मायिकाकारत्वेनैव व्यक्तिं वसुदेवगृहे जन्म प्राप्तं निर्व्बुद्धयो मन्यन्ते, मायिकाकारस्यैव दृश्यत्वादिति भावः ; यतो मम परं भावं मायातीतं स्वरूपजन्मकर्म्मलीलादिकमजानन्तः । भावं कीदृशम् ? अव्ययं नित्यमनुत्तमं सर्व्वोत्कृष्टम् "भावः सत्ता स्वभावाभिप्रायचेष्टात्मजन्मसु । क्रिया-लीला-पदार्थेषु" इति मेदिनी । भगवत्स्वरूप-गुणजन्मकर्म्मलीलानामनाद्यन्तत्वेन नित्यत्वं श्रीरूप-गोस्वामिचरणैर्भागवतामृतग्रन्थे प्रतिपादितम् । "मम परं भावं स्वरूपमव्ययं नित्यविशुद्धोर्ज्जितसत्त्वमूर्त्तिम्" इति स्वामिचरणैश्चोक्तम् ॥ २४ ॥

गी०भू०—अथ का वार्त्ता मदन्यदेवयाजिनामल्पमेधसामुपनिषन्निष्णातानामपि मद्भक्तिरिक्तानां मत्तत्त्वधीर्न स्यादित्याशयेनाह–अव्यक्तमिति । अबुद्धयो मत्तत्त्वयाथात्म्यबुद्धिशून्या जना अव्यक्तं स्वप्रकाशात्मविग्रहत्वादिन्द्रियाविषयं मां व्यक्तिमापन्नं तद्विषयां मन्यन्ते । देवक्यां वसुदेवात् सत्त्वोत्कृष्टेन कर्म्मणा सञ्जातमितरराजपुत्रतुल्यं मां वदन्ति, यतस्ते मदभिज्ञसत्प्रसङ्गाभावान्मम भावं परमव्ययमनुत्तममजानन्तः–"भावः सत्ता स्वभावाभिप्रायचेष्टात्मजन्मसु । क्रियालीलापदार्थेषु विभूतिबुधजन्तुषु" इति मेदिनीकारः, मद्भक्तिहीनास्ते मम स्वरूपगुणजन्मलीलादिलक्षणभावं मायादितः परमतोऽव्ययं नित्यमनुत्तमं सर्व्वोत्तमं न, किन्त्वन्यवन्मायिकमनित्यं साधारणञ्च गृह्णन्त इत्यर्थः । स्वरूपं हरेर्विज्ञानानन्दैकरसं-"विज्ञानमानन्दं ब्रह्म"इत्यादेः । सार्व्वज्ञादिगुणगणस्तस्य स्वरूपानुबन्धी–"अनन्तकल्याणगुणात्मकोऽसौ"इत्यादेः । अभिव्यक्तिमात्रं जन्म–"अजोऽपि सन्" इत्यादेः, परन्तु अव्यक्तस्यैव भजत्सु प्रसादेनैवाभिव्यक्तिशीलं–"न शक्यः स त्वया द्रष्टुमस्माभिर्वा बृहस्पते । यस्य प्रसादं कुरुते स वै तं द्रष्टुमर्हति ।।"इत्यादेः ।।२४।।



नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥२५॥

सारा०व०—ननु यदि त्वं नित्यरूपगुणलीलोऽसि, तदा ते तथाभूता सार्व्वकालिकी स्थितिः कथं न दृश्यते ? तत्राह—नाहमिति । अहं सर्व्वस्य सर्व्वदेशकालवर्त्तिनो जनस्य न प्रकाशो न प्रकटः । यथागुणलीलापरिकरवत्त्वेन सदैव विराजमानोऽपि कदाचिदेव केषुचिदेव ब्रह्माण्डेषु । किञ्च सूर्य्यो यथा सुमेरुशैलावरणवशात् सर्व्वदा लोकदृश्यो न भवति, किन्तु कदाचिदेव तथैवाहमपि योगमायया समावृतः । न च ज्योतिश्चक्रवर्त्तमानानां प्राणिनां ज्योतिश्चक्रमध्ये सामस्त्येन सदैव विराजमानोऽपि सूर्य्यः सर्व्वकालदेशवर्त्तिजनस्य न प्रकटः, किन्तु कादाचित्केषु च भारतादिषु खण्डेषु वर्त्तमानस्य जनस्यैव, तथैवाहमपि । स्वधामसु स्वरूपसूर्य्यो यथा सदैव दृश्यस्तथैव श्रीकृष्णधामनि मथुराद्वारकादौ स्थितानामिदानीन्तनानां जनानां तत्रस्थः कृष्णः कथं न दृश्यो भवति ? उच्यते—यदि ज्योतिश्चक्रमध्ये सुमेरुरभविष्यत्तदा तत्रापि तदावृतः सूर्य्यो दृश्यो नाभविष्यत् । तत्र तु मथुरादि-कृष्णद्युमणिधामनि सुमेरुस्थानीया योगमायैव सदा वर्त्तत इत्यतस्तदावृतः कृष्णार्कः सदा न दृश्यते किन्तु कदाचिदेवेति सर्व्वमनवद्यम् । अतो मूढो लोको मां श्यामसुन्दराकारं वसुदेवात्मजमव्ययं मायिकजन्मादिशून्यं

नाभिजानाति । अतएव कल्याणगुण-बारिधिं मामप्यन्ततस्त्यक्त्वा मन्निर्बिशेषस्वरूपं ब्रह्मैबोपासत इति ॥ २५ ॥

गी०भू०—ननु भक्ता इबाभक्ताश्च त्वां प्रत्यक्षीकुर्व्वन्ति प्रसादादेब भजत्स्वभिव्यक्तिरिति कथम् ? तत्राह-नाहमिति । भक्तानामेबाहं नित्यबिज्ञामसुखघनोऽनन्तकल्याणगुणकर्म्मा प्रकाशोऽभिव्यक्तो, न तु सर्व्वेषामभक्तानामपि । यदहं योगमायया समावृतो मद्बिमुखव्यामोहकत्वयोगयुक्तया मायया समाच्छन्नपरिसर इत्यर्थः, यदुक्तं-"माया‌जबनिकाच्छन्नमहिम्ने ब्रह्मणे नमः" इति । मायामूढ़ोऽयं लोकोऽति-मानुषदैवतप्रभावं बिधिरुद्रादिबन्दितमपि मां नाभिजानाति । कीदृशम् ? अजं जन्मशून्यं यतोऽव्ययमप्रच्युतस्वरूपसामर्थ्यसार्व्वज्ञ्यादिकमित्यर्थः ॥२५॥

वेदाहं समतीतानि वर्तमानानि चार्जुन ।
भविष्याणि च भूतानि मान्तु वेद न कश्चन ॥२३॥

सारा०ब०—किञ्च मायायाः स्वाश्रयव्यामोहकत्वाभाबाद्-बहिरङ्गा माया, अन्तरङ्गा योगमाया च मम ज्ञानं नाबृणोतीत्याह—वेदाहमिति । मान्तु कश्चन प्राकृतोऽप्राकृतश्च लोको महारुद्रादिर्महासर्व्वज्ञोऽपि न कार्त्स्न्येन वेद, यथायोगं मायया योगमायया च ज्ञानाबरणादिति भावः ॥ २६ ॥

गी०भू०—ननु मायाबृतत्वात्तव जीबबदज्ञतापत्तिरिति चेत्त्राह-वेदाहमिति । न हि मदधीनया मत्तेजसाभिभूतया दूरतो जवनिकयैव मां सेवमानया मायया मम काचिद्बिकृतिरित्यर्थः । मान्तु वेदेति मज्ज्ञानी कोटिष्वपि सुदुर्लभ इत्यर्थः ॥२६॥

इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।
सर्वभूतानि संमोहं सर्गे यान्ति परंतप ॥२७॥



सारा०ब०—त्वन्मायया जीवाः कदारभ्य मुह्यन्तीत्यपेक्षायामाह—इच्छेति । सर्गे जगत्सृष्ट्यारम्भकाले सर्व्वभूतानि सर्व्वे जीवाः सम्मोहयन्ति, केन ? प्राचीनकर्म्मोद्बुद्धौ याबिच्छाद्वेषौ इन्द्रियाणामनुकूले बिषये इच्छाऽभिलाषः, प्रतिकूले द्वेषः, ताभ्यां समुत्थः समुद्भूतो यो द्वन्द्वे मानापमानयोः शीतोष्णाद्योः सुखदुःखयोः स्त्रीपुंसयोर्मोहः 'अहं सम्मानितः सुखी' अहमबमानितो दुःखी, ममेयं स्त्री, ममायं पुरुषः"—इत्याद्याकारक आबिद्यको यो मोहस्तेन सम्मोहं स्त्रीपुत्रादिष्वत्यन्तासक्तिं प्राप्नुबन्ति, अतएबात्यन्तासक्तनां न मद्भक्तावधिकारः, यदुद्धवं प्रति मयैव वक्ष्यते—"यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् । न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः ॥" इति ॥२७॥

गी०भू०—त्वज्ज्ञानी कुतः सुदुर्लभस्तत्राह-इच्छेति । सर्गे स्वोत्पत्तिकाले एव सर्व्वभूतानि सम्मोहं यान्ति । केनेत्याह-द्वन्द्वमोहेनेति । मानापमानयोः सुखदुःखयोः स्त्रीपुरुषयोर्द्वन्द्वैर्यो मोहः सत्कृतोऽहं सुखी स्यामसत्कृतस्तु दुःखी ममेयं पत्नी ममायं पतिरित्येवमभिनिवेशलक्षणस्तेनेत्यर्थः । कीदृशेनेत्याह-इच्छेति-पूर्व्वजन्मनि यत्र यत्र याविच्छाद्वेषाबभूतां ताभ्यां संस्कारात्मना स्थिताभ्यां समुत्तिष्ठति परजन्मनि तत्र तत्रोत्पद्यत इत्यर्थः । इच्छा रागः, एवं सर्व्वेषां भूतानां संमूढ़त्वान्मज्ज्ञानी सुदुर्लभः ॥२७॥

येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥२८॥

सारा०ब०—तर्हि केषां भक्तावधिकार इत्यत आह—येषां पुण्यकर्म्मणां पापं त्वन्तं गतमन्तकालं प्राप्तं नश्यदवस्थम्, न तु सम्यक् नष्टमित्यर्थः । तेषां सत्त्वगुणोद्रेके सति तमोगुणह्रासः । तस्मिन् सति तत्कार्य्यो मोहोऽपि ह्रसति । मोहह्रासे

सति ते खल्वत्यासक्तिरहिता यादृच्छिकमद्भक्तसङ्गेन भजन्ते मात्रम्। ये तु भजनाद्यभ्यासतः सम्यक् नष्टपापास्ते मोहेन निःशेषेण मुक्ता दृढ़व्रताः प्राप्तनिष्ठाः सन्तो मां भजन्ते। न चैवं पुण्यकर्म्मैव सर्व्वविधाया भक्तेः कारणमिति मन्तव्यम्, "सन्न्यासादेर्न सांख्येन दानव्रततपोऽध्वरैः। व्याख्या-स्वाध्याय-सन्न्यासैः प्राप्नुयाद्यत्नवानपि॥" इति भगवदुक्तेः। केवल-भक्तियोगस्य पुण्यादिकर्म्माश्रयं नैव कारणमिति बहुशः प्रतिपादनात् ॥ २८ ॥

गी०भू०—ननु केषाञ्चित् त्वद्भक्तिः प्रतीयते सा न स्यात् सर्व्वभूतानि सर्गे संमोहं यान्तीत्युक्तेरिति चेत्तत्राह-येषां प्राणिनां यादृच्छिकमहत्तमदृष्टिपातात् पापमन्तगतं नाशं प्राप्तमभूत्-"बिष्णोर्भूतानि भूतानां पावनाय चरन्ति हि" इति स्मृतेः। कीदृशानामित्याह-पुण्येति। पुण्यं मनोज्ञं कर्म्म महत्तमबीक्षणरूपं येषां-"पुण्यं तु चार्व्वपि" इत्यमरः। ते दृढ़व्रता महत्प्रसङ्गप्राप्तनिष्ठा द्वन्द्वमोहेन निर्मुक्ता मत्तत्त्वज्ञाः सन्तो मां भजन्ते।२८॥

**जरामरणमोक्षाय मामाश्रित्य यतन्ति ये।**
**ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥२९॥**

सारा०ब०--तदेवमार्त्ताद्यास्त्रयः सकामा मां भजन्तः कृतार्था भवन्तीति। देवतान्तरं भजन्तस्तु च्यवन्त इत्युक्त्वा स्वस्याभजनेऽप्यधिकारिणश्चोक्ता भगवता। इदानीमन्यः सकामः चतुर्थोऽपि मद्भक्तोऽस्तीत्याह--जरेति। जरामरणयोर्मोक्षाय नाशाय ये योगिनो यतन्ति यतन्ते, ते मोक्षकामा मां भजन्तीति फलितोऽर्थः, ते तत्प्रसिद्धं ब्रह्म तथा कृत्स्नमात्मानं देहमधिकृत्य भोक्तृतया वर्त्तमानमध्यात्मं जीवात्मानमखिलं कर्म्म च नानाविधकर्म्मजन्यं जीवस्य संसारञ्च मद्भक्तिप्रभावादेव विदुर्जानन्ति ॥ २९ ॥



गी०भू०—तदेवमार्त्तादयः सकामा मद्भक्ताः कामाननुभूयान्ते मां प्रपद्य विन्दन्ति मदन्यदेवभक्तास्तु संसरन्तीत्युक्तम्। अथ तेभ्योऽन्योऽपि सकामो मद्भक्तोऽस्तीत्युच्यते-जरेति—ये जरामरणाभ्यां विमोक्षाय तन्मात्रकामाः सन्तो मामाश्रित्य मदर्च्चां सेवित्वा यतन्ते-तत्प्रणामादि कुर्व्वन्ति, ते तत् प्रसिद्धं ब्रह्म कृत्स्नं सपरिकरं विदुरध्यात्मं चाखिलं कर्म्म च विदुः। ब्रह्मादिशब्दानामधिभूतादिशब्दानाञ्चार्थाः परस्मिन्नध्याये भगवतैव व्याख्यास्यन्ते। मदर्च्चा-सेवया विज्ञेयं विज्ञाय मुक्तिं लभन्ते, न तु मद्वश्यताकरीं मत्प्रियतामित्यर्थः। स्मृतिश्चैवमाह-"सकृद्यदङ्ग प्रतिमान्तराहिता मनोमयीं भागवतीं ददौ गतिम्" इत्याद्या ॥२९॥

**साधिभूताधिदैवं मां साधियज्ञं च ये विदुः।**
**प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥३०॥**

इति महाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्व्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्ज्जुनसंवादे ज्ञान-विज्ञान-योगो नाम सप्तमोऽध्यायः।



सारा०ब०--मद्भक्तिप्रभावाद्येषामीदृशं मज्ज्ञानं स्यात्तेषामन्तकालेऽपि तदेव ज्ञानं स्यात्, न त्वन्येषामिव कर्म्मोपस्थापिता भाविदेहप्राप्त्यनुरूपा मतिरित्याह--साधिभूतेति। अधिभूतादयोऽग्रिमाध्याये व्याख्यास्यन्ते। भक्ता एव हरेस्तत्त्वविदो मायां तरन्ति, ते चोक्ताः षड्विधा अत्रेत्यध्यायार्थो निरूपितः॥३०॥

इति सारार्थवर्षिण्यां हर्षिण्यां भक्तचेतसाम्।
गीतासु सप्तमोऽध्यायः सङ्गतः सङ्गतः सताम्॥ (३)

गी०भू०—न च तत्सेबया प्राप्तं तज्ज्ञानं कदाचिदपि भ्रंशेतेत्याह—साधीति । अधिभूतेनाधिदैवेनाधियज्ञेन च सहितं मां ये बिदुः सत्प्रसङ्गाज्जानन्ति, ते प्रयाणकाले मृत्युसमयेऽपि मां बिदुर्न तु तदन्यबद्व्यग्राः सन्तो मां बिस्मरन्तीत्यर्थः ॥३०॥

मां बिदुस्तत्त्वतो भक्ता मन्मायामुत्तारन्ति ते ।
ते पुनः पञ्चधेत्येष सप्तमस्य विनिर्णयः ॥

इति श्रीमद्भगवद्गीतोपनिषद्भाष्ये सप्तमोऽध्यायः ।

# अष्टमोऽध्यायः

अर्जुन उवाच—

किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।
अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥१॥
अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन ।
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥२॥

सारा०ब०-पार्थप्रश्नोत्तारं योगं मिश्रां भक्ति प्रसङ्गतः ।
शुद्धाञ्च भक्ति प्रोबाच द्वे गती अपि चाष्टमे ॥ (१)

पूर्ब्बाध्यायान्ते ब्रह्मादिसप्तपदार्थानां ज्ञानं भगवतोक्तम् । अत्र तेषां तत्त्वं जिज्ञासुः पृच्छति द्वाभ्याम्-अत्र देहे कोऽधियज्ञो यज्ञाधिष्ठाता, स चास्मिन् देहे कथं ज्ञेय इत्युत्तारस्यानुषङ्गी ॥१-२॥

गी०भू०—उक्तान् पृष्टः क्रमाद्व्याख्यद्ब्रह्मादीन् हरिरष्टमे ।
योगमिश्राञ्च शुद्धाञ्च भक्तिमार्गद्वयं तथा ॥



गी०भू०—पूर्व्वाध्यायान्ते मुमुक्षुणां ज्ञेयतयोद्दिष्टान ब्रह्मादीन् सप्तार्थान् बिबोद्धुमर्ज्जुनः पृच्छति—किं तद्ब्रह्मेति—किं परमात्मचैतन्यं वा, किं जीवात्मचैतन्यं बा तद्ब्रह्मेत्यर्थः । किमध्यात्ममिति—आत्मानं देहमधिकृत्येति निरुक्तेः, श्रोत्रादीन्द्रियवृन्दं बा सूक्ष्मभूतवृन्दं बा तदिति । किं कर्म्मेति—लौकिकं वैदिकं बा तदिति । आवयोस्तौल्यात् किमिति मां पृच्छसीति शङ्कां निवर्त्तयितुं सम्बोधनं—हे पुरुषोत्तमेति, परेशत्वात्तव सर्व्वं सुविदितं, न तु ममेति भावः । अधिभूतञ्च किमिति—भूतान्यधिकृत्येति निरुक्तेर्घटाद्यादिकार्य्यं बा स्थूलशरीरं बा तदिति । अधिदैवं किमिति—देबताबिषयकमनुध्यानं बा समष्टिबिराट् वा तदिति ॥१॥

गी०भू०—अधियज्ञः क इति—यज्ञमधिगत इन्द्रादिर्बा बिष्णुर्बा स इति, कथमिति तस्याधियज्ञभावः कथमित्यर्थः । एतत् सर्व्वं मत्सन्देहनिबारणं तवैषत्करमिति बोधयितुं सम्बोधनं—हे मधुसूदनेति । प्रयाणेति—तदा सर्व्वेन्द्रियव्यग्रतया चित्तासमाधानासम्भबादिति भाबः ॥२॥

श्रीभगवानुवाच-

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥३॥

सारा०ब०—उत्तरमाह—अक्षरमिति । न क्षरतीत्यक्षरं नित्यं यत् परमं तद्ब्रह्म-"एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति" इति श्रुतेः । स्वभावः स्वमात्मानं देहाध्यासबशाद्भाबयति जनयतीति स्वभाबो जीवः, यद्वा स्वं भाबयति परमात्मानं प्रापयतीति 'स्वभावः' शुद्धजीवोऽध्यात्ममुच्यते—अध्यात्म-शब्दबाच्य इत्यर्थः । भूतैरेब भावानां मनुष्यादिदेहानामुद्भबं करोतीति स

बिसर्गो जीवस्य संसारः कर्म्मजन्यत्वात् कर्म्मसंज्ञः, कर्म्मशब्देन जीवस्य संसार उच्यत इत्यर्थः ॥ ३ ॥

गी०भू०—एवं पृष्टो भगबान् क्रमेण सप्तानामुत्तरमाह—अक्षरमिति । न क्षरतीति निरुक्तेरक्षरं यत् परमं देहादिबिबिक्तं जीबात्मचैतन्यं तन्मया ब्रह्मेत्युच्युते । तस्याक्षरशब्दत्वं ब्रह्मशब्द-त्वञ्च--"अव्यक्तमक्षरे लीयतेऽक्षरं तमसि लीयते तम एकी-भवति परस्मिन्निति"बिज्ञानं ब्रह्म चेद्वेद" इति च श्रुतेः । स्वभाव इति--स्वस्य जीबात्मनः सम्बन्धी यो भाबो भूतसूक्ष्मतद्वासना-लक्षणपदार्थः । पञ्चाग्निबिद्यायां पठितस्तदात्मनि संबध्यमान-त्वान्मयाध्यात्ममुच्यते । भूतेति--तेषां सूक्ष्माणां भूतानां स्थूलैस्तैः संपृक्तानां भाबो मनुष्यादिलक्षणस्तदुद्भवकरस्तदुत्पादको यो विसर्गः ; स कर्म्मसंज्ञितः—ज्योतिष्टोमादिकर्म्मणा स्वर्गमासाद्य तस्मिन् देवदेहेन तत्कर्म्मोपभुज्यभाण्डसंक्रान्तघृतशेषबद्भोगोर्व्व-रितो यः कर्म्मशेषो भुवि मनुष्यादि-देहलाभाय विसृष्टस्तन्मया कर्म्मोच्यते । छान्दोग्ये—द्यु पर्ज्जन्यपृथिवी पुरुषयोषित्सु पञ्च-स्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतांसि क्रमान् पञ्चाहुतयः पठ्यन्ते । तत्रायमर्थः—वैदिको जीव इहलोकेऽस्मयानि दध्यादीनि श्रद्धया जुहोति । ता दध्यादिमय्यः पञ्चीकृतत्वात् पञ्चभूतरूपा आपः श्रद्धया हुतत्वात् श्रद्धाख्याहुतिस्वरूपेण तस्मिन् जीवे संबद्धा-स्तिष्ठन्ति—अथ तस्मिन् मृते तदिन्द्रियाधिष्ठातारो देवास्ता द्युलोकाग्नौ जुह्वति । तद्वन्तं जीवं दिवं नयन्तीत्यर्थः । हुतास्ताः सोमराजाख्य-दिव्यदेहतया परिणमन्ते, तेन देहेन स तत्र कर्म्म-फलानि भुङ्क्ते । तद्भोगाबसानेऽस्मयो जीववान् देहैस्तैर्देवैः पर्जन्याग्नौ हुतो वृष्टिर्भवति । वृष्टिभूतास्ताः सजीवाः पृथिव्यग्नौ तैहुता ब्रीह्याद्यन्नभावं लभन्ते । अन्नभूताः सजीबास्ताः पुरु-षाग्नौ हुता रेतोभावं भजन्ते । रेतोभूताः सजीवास्ता योषिदग्नौ तैर्हुता गर्भात्मना स्थिता मनुष्यभावं प्रयान्तीति तद्भावहेतु-रनुशयशब्दबाच्यः कर्म्मशेषः कर्म्मेति । एवमेबोक्तं सूत्रकृता—"तदन्तरप्रतिपत्तौ" इत्यादिभिः ॥३॥



अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥४॥

सारा०ब०—क्षरो नश्वरो भावः पदार्थो घटपटादिरधि-भूतमधिभूतशब्दबाच्यः, पुरुषः समष्टिबिराडधिदैवतमधिदैवत-शब्दबाच्यः--"अधिकृत्य बर्त्तमानानि सूर्य्यादिदैवतानि यत्र" इति तन्निरुक्तेः । अत्र देहेऽधियज्ञो यज्ञादिकर्म्मप्रबर्त्तको-ऽन्तर्य्याम्यहं मदंशकत्वादहमेवेत्येब-कारेण कथं ज्ञेय इत्यस्यो-त्तरमन्तर्य्यामित्वेऽहमेव, मदभिन्नत्वे नैव ज्ञेयो न त्वध्यात्मादि-रिब मद्भिन्नत्वेनेत्यर्थः । देहे देहभृतां वरेति त्वन्तु साक्षान्मत्-सखत्वात् सर्व्वश्रेष्ठ एब भबसीति भावः ॥ ४ ॥

गी०भू०--अधीति । क्षरः प्रतिक्षणपरिणामी भावः स्थूलो देहः स मयाधिभूतमित्युच्यते-भूतं प्राणिनमधिकृत्य भबतीति व्युत्पत्तेः । पुरुषः समष्टिबिराट् स मयाधिदैवमित्युच्यते-अधि-कृत्य बर्त्तमानान्यादित्यादीनि दैवतान्यत्रेति व्युत्पत्तेः । अत्र देहेऽधियज्ञो-यज्ञमधिकृत्य बर्त्तत इति व्युत्पत्तेस्तत्प्रबर्त्तकस्तत्फल-प्रदश्चाहमेव । प्रत्याख्येयानि तु स्वयमेवोह्यानि । एब कारेण स्व-स्मात्तस्य भेदो निराकृतः । अनेन 'कथम' इत्यस्याप्युत्तरमुक्तं—प्रादेशमात्रबपुस्त्वेनान्तर्नियमयन्नहं यज्ञादिप्रबर्त्तक इत्यर्थः । तथा च मदर्चासिवनादेतान् ब्रह्मादीन सप्तार्थान् स्वरूपतोऽश्रमेण बिन्द-तीति ; तत्र ब्रह्माधियज्ञौ प्राप्यतयाध्यात्मादीनि तु हेयतयेति ॥४॥

अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥५॥

सारा०ब०—प्रयाणकाले कथं ज्ञेयोऽसीत्यस्योत्तरमाह—अन्तकाले चेति। मामेव स्मरन्निति मत्स्मरणमेव मज्ज्ञानम्, न तु घटपटादिरिवाहं केनापि तत्वतो ज्ञातुं शक्य इति भावः। स्मरणरूपज्ञानस्य प्रकारस्तु चतुर्द्दशश्लोके वक्ष्यते ॥ ५ ॥

गी०भू०—प्रयाणकाले कथं ज्ञेयोऽसीत्यस्योत्तरमाह-अन्तेति-अत्र स्मरणात्मकेन ज्ञानेन ज्ञेयो भवन्मद्भावोपलम्भनञ्च तत्फलं प्रयच्छामीत्युक्तम्। तत्र मद्भावं मत्स्वभावमित्यर्थः। यथाहमपहतपाप्मत्वादिगुणाष्टकविशिष्टस्वभावस्तादृशः स मत्स्मर्त्ता भवतीति ॥५॥

यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम्।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥६॥

सारा०ब०—मामेव स्मरन्मां प्राप्नोतीतिवन्मदन्यमपि स्मरन्मदन्यमेव प्राप्नोतीत्याह—यं यमिति। तस्य भावेन भावनेनानुचिन्तनेन भावितो वासितस्तन्मयीभूतः ॥ ६ ॥

गी०भू०—न च मत्स्मर्त्तैव मद्भावं यातीति नियमः, किन्त्वन्यस्मर्त्ताप्यन्यभावं यातीत्याह-यं यमिति। भावं पदार्थम्; तं तमेव भावदेहत्यागोत्तरमेवैति-यथा भरतो देहान्ते मृगं चिन्तयन् मृगोऽभूत्। अन्तिमस्मृतिश्च पूर्व्वस्मृतविषयैव भवतीत्याह-सदेति। तद्भावभावितस्तत्स्मृतिवासितचित्तः ॥६॥

तस्मात्सर्वेषु कालेषु मामनुस्मर युध्यस्व।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम् ॥७॥

सारा०ब०-मनः सङ्कल्पकात्मकम्, बुद्धिर्व्यवसायात्मिका ॥७॥

गी०भू०—यस्मात् पूर्व्वस्मृतिरेवान्तिमस्मृतिहेतुस्तस्मात् त्वं सर्व्वेषु कालेषु प्रतिक्षणं मामनुस्मर युध्यस्व च लोकसंग्रहाय



युद्धादीनि स्वोचितानि कर्म्माणि कुरु। एवं मय्यर्पितमनोबुद्धिस्त्वं मामेवैष्यसि, न त्वन्यदित्यत्र सन्देहस्ते माभूत् ॥७॥

अभ्यासयोगयुक्तेन चेतसा नान्यगामिना।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥८॥

सारा०ब०—तस्मात् स्मरणाभ्यासिन एवान्तकाले स्वतएव मत्स्मरणं भवति, तेन च मां प्राप्नोतीत्यतश्च तसो मत्स्मरणमेव परमो योग इत्याह—अभ्यासयोग इति। अभ्यासो मत्स्मरणस्य पुनः पुनरावृत्तिरेव योगस्तद्युक्तेन चेतसा, अतएव नान्यं विषयं गन्तुं शीलं यस्य तेन, स्मरणाभ्यासेन चित्तस्य स्वभावविजयोऽपि भवतीति भावः ॥ ८ ॥

गी०भू०-सार्व्वदिकी स्मृतिरेवान्तिमस्मृतिकरीत्येवं द्रढ़यति-अभ्यासेति। अभ्यासः स्मरणावृत्तिरेव योगस्तद्युक्तेनातएवानन्यगामिना, ततोऽन्यत्राचलता तदेकाग्रेण चेतसा दिव्यं पुरुषं परमं सश्रीकं नारायणं वासुदेवमनुचिन्तयन् तमेव कीटभृङ्गन्यायेन तत्तुल्यः सन् याति लभते ॥८॥

कविं पुराणमनुशासितार मणोरणीयांसमनुस्मरेद्यः।
सर्व्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ॥९

प्रयाणकाले मनसाऽचलेन
भक्त्या युक्तो योगवलेन चैव।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्
स तं परं पुरुषमुपैति दिव्यम् ॥१०॥

सारा०ब०—योगाभ्यासं विना मनसो विषयग्रामान्निवृत्ति-

दुर्घटा, यच्च बिना सातत्येन भगवत्स्मरणमपि दुर्घटमिति युक्तम्। केनचित् योगाभ्यासेन सहितैव भक्तिः क्रियत इति तां योगमिश्रां भक्तिमाह—कविमिति पञ्चभिः। कविं सर्व्वज्ञं सर्व्वज्ञोऽप्यन्यः सनकादिः सार्व्वकालिको न भवत्यत आह-पुराणमनादिं सर्व्वज्ञोऽनादिरप्यन्तर्य्यामी स भक्त्युपदेष्टा न भवत्यत आह—अनुशासितारम, कृपया स्वभक्तिशिक्षकं कृष्णरामादिस्वरूपमित्यर्थः। तादृशकृपालुरपि सुदुर्व्विज्ञेयतत्त्व एव इत्याह-अणोः सकाशादप्यणीयांसम्। तर्हि स किं जीव इव परमाणुप्रमाणस्तत्राह-सर्व्वस्य धातारं सर्व्ववस्तुमात्रधारकत्वेन सर्व्वव्यापकत्वात् परं महापरिमाणमपीत्यर्थः, अतएवाचिन्त्यरूपम्। पुरुषविधत्वेन मध्यमपरिमाणमपि तस्यानन्यप्रकाश्यत्वमाह--आदित्यवर्णमादित्यवत् स्वपरप्रकाशको वर्णः स्वरूपं यस्य, तथा तमसः प्रकृतेः परस्तात् वर्त्तमानं मायाशक्तिमन्तमपि मायातीतस्वरूपमित्यर्थः। प्रयाणकालेऽन्तकालेऽचलेन निश्चलेन मनसा या सततस्मरणमयी भक्तिस्तया युक्तः। कथं मनसो नैश्चल्यम्? अत आह्--योगस्य योगाभ्यासस्य बलेन। योगप्रकारं दर्शयति-भ्रुवोर्मध्ये आज्ञाचक्रे ॥ ९-१० ॥

गी०भू०—योगादृते चेतसोऽनन्यगामिता दुष्करेति योगमिश्रां भक्तिमाह्-कविमित्यादिभिः पञ्चभिः। कविं सर्व्वज्ञम्, अनुशासितारं रघुनाथादिरूपेण हितोपदेष्टारम्; अणोरणीयांसं तेन चाणुमपि जीवमन्तः प्रविशतीति सिद्धम; आह चैवं श्रुतिः-"अन्तःप्रविष्टः शास्ता जनानाम्" इति। अणीयसोऽपि तस्य व्याप्तिमाह्-सर्व्वस्येति। कृत्स्नस्य जगतो धातारं धारकम, ननु कथमेवं संगच्छते तत्राह-अचिन्त्यरूपमचिन्त्यस्वरूपं "एकमेव ब्रह्म पुरुषविधत्वेन मध्यमपरिमाणमणोरणीयांसम्" इत्युक्तेः, "परमाणुपरिमाणं सर्व्वस्य धातारम्" इत्युक्तेः, "परं महापरि-



माणं" चेति; नात्र युक्तेरवकाशः। स्वप्रकाशतामाह्--आदित्येति सूर्य्यवत् स्वपरप्रकाशकमित्यर्थः। मायागन्धास्पर्शमाह्—तमस इति, तमसो मायायाः परस्तात् स्थितं-मायिनमपि मायातीतमित्यर्थः। एतादृशं पुरुषं योऽनुक्षणं स्मरेत्, स तं परं पुरुषमुपैति इति परेणान्वयः। यो जनो भक्त्या परमात्मप्रेम्णा योगबलेन समाधिजनितसंस्कारनिचयेन च युक्तः प्रयाणकाले मरणसमयेऽचलेनैकाग्रेण मनसा तं पुरुषमनुस्मरेत्। योगप्रकारमाह्-भ्रुवोरिति। भ्रुवोर्मध्ये आज्ञाचक्रे प्राणमावेश्य संस्थाप्य सम्यक् सावधानः सन् स तं पुरुषमुपैति ॥९-१०॥

यदक्षरं वेदविदो वदन्ति
विशन्ति यद्यतयो वीतरागाः।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं संग्रहेण प्रवक्ष्ये ॥११॥

सार०ब०--ननु भ्रुवोर्मध्ये प्राणमावेश्य, इत्येतावन्मात्रोक्त्या योगो न ज्ञायते, तस्मात् तत्र योगे प्रकारः कः, किं जप्यम्, किं बा ध्येयम्, किं वा प्राप्यमित्यपि संक्षेपेण ब्रूहीत्यपेक्षायामाह्-यदिति त्रिभिः। यदेवाक्षरं ओमित्येकाक्षरवाच्यं ब्रह्म यतयो विशन्ति, तत्पदं पद्यत गम्यते इति पदं प्राप्यम् सम्यक्तया गृह्यतेऽनेनेति संग्रहस्तदुपायस्तेन सह प्रवक्ष्ये शृणु॥११॥

गी०भू०—ननु भ्रुवोर्मध्ये प्राणमावेश्यैतावता योगो नावगम्यते, तस्मात्तस्य प्रकारं तत्र जप्यं प्राप्यं ब्रूहीत्यपेक्षायामाह्-यदक्षरमिति त्रिभिः। एकमेव ब्रह्म-द्विरूपं, वाचकं वाच्यञ्चेति स्थितम्। तत्र वेदविदो यद्ब्रह्म अक्षरमोमिति वाचकं वदन्ति, वीतरागा विनष्टाविद्या यतयो यद्ब्रह्म तद्वाच्यभूतं विज्ञानैकरसं विशन्ति प्राप्नुवन्ति। तदुभयरूपं ब्रह्म ज्ञातुमिच्छन्तो नैष्ठिका

गुरुकुलवासादिलक्षणं ब्रह्मचर्य्यं चरन्ति। तत्पदं प्राप्यं संग्रहेणोपायेन सह प्रवक्ष्ये प्रकर्षेण वक्ष्यामि—यथानायासेन त्वं तद्विद्यां प्राप्नुयाः। "सम्यक् गृह्यते तत्त्वमनेन" इति निरुक्तेः संग्रह उपायः ॥११॥

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च।
मूर्द्धन्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥१२
ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्।
यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥१३॥

सारा०ब०—उक्तमर्थं वदन् योगे प्रकारमाह—सर्व्वाणि चक्षुरादीन्द्रियद्वाराणि संयम्य बाह्यविषयेभ्यः प्रत्याहृत्य मनश्च हृद्येव निरुध्य विषयान्तरेष्वसंकल्प्य मूर्द्धिन भ्रुवोर्मध्ये एव प्राणमाधाय योगधारणामानखशिख--मन्मूर्त्तिभावनामाश्रितः सन् ओमित्येकमेवाक्षरं ब्रह्मस्वरूपं व्याहरनुच्चारयन्, तद्वाच्यं मामनुस्मरन्ननुध्यायन् परमां गतिं मत्सालोक्यम् ॥ १२-१३ ॥

गी०भू०—योगप्रकारमाह—सर्व्वेति। सर्व्वाणि बहिर्ज्ञानद्वाराणि श्रोत्रादीनि संयम्य शब्दादिभ्यो विषयेभ्यः प्रत्याहृत्य दोषदर्शनाभ्यासेन तद्विमुखैस्तैस्तान् गृह्णन् श्रोत्रादिसंयमेऽपि मनः प्रचरेदित्येत आह—हृदि स्थिते मयि अन्तर्ज्ञानद्वारं मनो निरुध्य निवेश्य मनसापि तान् स्मरन्। अथ क्रियाद्वारं प्राणञ्च मूर्द्ध्न्याधायादौ हृत्पद्मे वशीकृत्य तस्मादूर्द्ध्वगतया सुषुम्नया गुरूपदिष्टवर्त्मना भूमिजयक्रमेण भ्रुवोर्मध्ये तदुपरि ब्रह्मरन्ध्रे च संस्थाप्य आत्मनो मम योगधारणामापादशिखं मद्भावनमास्थितः कुर्व्वन्। ओमिति वाचकं ब्रह्म, तत्र व्याहरन् अन्तरुच्चारयन्; तत् स्तौति—एकाक्षरमिति। एकं प्रधानञ्च तदक्षरम-



विनाशि चेति तथा तद्वाच्यं मां परमात्मानमनुस्मरन् ध्यायन् यो देहं त्यजन् प्रयाति, स परमां गतिं मत्सलोकतां याति ॥१२-१३

अनन्यचेताः सततं यो मां स्मरति नित्यशः।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥१४॥

सारा०ब०—तदेवं 'आर्त्तः' इत्यादिना कर्म्ममिश्राम, जरामरणमोक्षाय' इत्यनेनापि कर्म्ममिश्राम्, 'कविं पुराणम्' इत्यादिभिर्योगमिश्राञ्च सपरिकरां प्रधानीभूतां भक्तिमुक्त्वा सर्व्वश्रेष्ठां निर्गुणां केवलां भक्तिमाह—अनन्यचेता इति। न विद्यतेऽन्यस्मिन् कर्म्मणि ज्ञानयोगे वानुष्ठेयत्वेन, तथा देवतान्तरे वाराध्यत्वेन, तथा स्वर्गापवर्गादावपि प्राप्यत्वेन चेतो यस्य। सततं सदेति कालदेशपात्रशुद्ध्याद्यनपेक्षतयैव नित्यशः प्रतिदिनमेव यो मां स्मरति, तस्य तेन भक्तेनाहं सुलभः सुखेन लभ्यः। योगज्ञानाभ्यासादिदुःखमिश्रणाभावादिति भावः। नित्ययुक्तस्य नित्य-मद्योगाकाङ्क्षिण आशंसायां भूतवच्चेति भाविन्यपि योग आशंसिते क्त-प्रत्ययः। योगिनो भक्तियोगवतः, यद्वा योगसम्बन्धो दास्यसख्यादिस्तद्वतः ॥ १४ ॥

गी०भू०-एवंमोक्षमात्रकाङ्क्षिणां योगमिश्रां भक्तिमुपदिश्य स्वज्ञानिनां स्वमेवाकाङ्क्षतामेकभक्तिरित्युक्तां शुद्धां भक्तिं उपदिशति—अनन्येति-यो जनोऽनन्यचेता न मत्तोऽन्यस्मिन् कर्म्मयोगादिके साधने स्वर्गमोक्षादिके साध्ये वा चेतो यस्य स मदेकाभिलाषवान् सततं सर्व्वदा देशकालादिविशुद्धिनैरपेक्ष्येण नित्यशः प्रत्यहं मां यशोदास्तनन्धयं नृसिंहरघुनाथादिरूपेण बहुधाविभूतं सर्व्वेश्वरमतिमात्रप्रियं स्मरत्यजस्रं तज्जपादिष्वनुसन्धत्ते, तस्याहं तत्प्रीतिज्ञः सुलभः सुखेन लभ्यः कर्म्मानुष्ठानयोगाभ्यासादिदुःखसम्पर्काभावात्। तस्येति—"सम्बन्धसा-

मान्ये षष्ठी", "न लोकाव्यय" इत्यादिना कर्त्तरि तस्याः प्रतिषेधात्। तादृशस्य तस्य बियोगमसहिष्णुरहमेव तमात्मानं दर्शयामि तत्साधनपरिपाकं तत्प्रतिकूलनिरासञ्च कुर्व्वन्। श्रुतिश्चैवमाह–"यमेवैष बृणुते तेन लभ्यस्तस्यैष आत्मा बिबृणुते तनूं स्वाम्" इति ; स्वयञ्च बक्ष्यति–"ददामि बुद्धियोगं तं येन मामुपयान्ति ते" इत्यादिना। कीदृशस्येत्याह–नित्येति सर्व्वदा मद्योगं बाञ्छतः–"आशंसायां भूतवच्च" इति सूत्रादाशंसिते योगे भविष्यत्यपि क्तप्रत्ययः ; योगिनो मद्दास्यसख्यादिसम्बन्धवतः ॥१४॥

**मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।**
**नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥१५॥**

सारा०ब०––त्वां प्राप्तवतस्तस्य किं स्यादित्याह-मामिति। दुःखालयं दुःखपूर्णं अशाश्वतम् अनित्यञ्च जन्म नाप्नुबन्ति, किन्तु सुखपूर्णं जन्म मज्जन्मतुल्यं प्राप्नुवन्ति, "शाश्वतस्तु ध्रुवो नित्यः सदातनः सनातनः" इत्यमरः। यदा वसुदेवगृहे सुखपूर्णं नित्यभूतम् अप्राकृतं मज्जन्म भवेत्तदेव तेषां मद्भक्तानामपि मन्नित्यसङ्गिनां जन्म स्यान्नान्यदा इति भावः। परमामिति अन्ये भक्ताः संसिद्धिं प्राप्नुबन्ति अनन्यचेतसस्तु परमां संसिद्धिं मल्लीलापरिकरतामित्यर्थः। तेनोक्तलक्षणेभ्यः सर्व्वभक्तेभ्यो दृश्य-श्रैष्ठ्यं द्योतितम् ॥ १५ ॥

गी०भू०—तां लब्धबतः किं फलं स्यादित्यपेक्षायामाह—मामिति। मामुक्तलक्षणमुपेत्य प्राप्य पुनः प्रपञ्चे जन्म नाप्नुबन्ति नाबर्त्तन्त इत्यर्थः। कीदृशं जन्मेत्याह–दुःखालयं गर्भबासादिबहुक्लेशपूर्णम् ; अशाश्वतमनित्यं दृष्टनष्टप्रायम्—"शाश्वतस्तु ध्रुवो नित्यः" इत्यमरः। यतस्ते परमां सर्व्वोत्कृष्टां संसिद्धि



गतिं मामेव गता लब्धबन्तः––'अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्' इति बक्ष्यति। कीदृशास्ते महात्मानोऽत्युदारमनसः बिज्ञानानन्दनिधिं भक्तप्रसादाभिमुखं भक्तायत्तसर्व्वस्वं मां विनान्यत् साष्टर्यादिकमगणयन्तो मदेकजीवातवो भबन्त्यतस्ते मामेव संसिद्धिं गताः। अत्रानन्यचेतसोऽस्य स्वैकान्तिनः स्वनिष्ठेभ्यः स्वभक्तेभ्यः श्रैष्ठ्य-मुच्यते ॥१५॥

**आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।**
**मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥१६॥**

सारा०ब०––सर्व्वे एव जीवा महासुकृतिनोऽपि जायन्ते मद्भक्तास्तु तद्वन्न जायन्त इत्याह-आब्रह्मेति। ब्रह्मणो भुवनं सत्यलोकस्तमभिव्याप्य ॥ १६ ॥

गी०भू०—मद्विमुखास्तु कर्म्मविशेषैः स्वर्गादिलोकान् प्राप्ता अपि तेभ्यः पतन्तीत्याह-आब्रह्मेति। अभिबिधावाकारः, ब्रह्म भुवनं व्याप्येत्यर्थः। ब्रह्मलोकेन सह सर्व्वे स्वर्गादयो लोकास्तत्तद्वर्त्तिनो जीबास्तत्तत्कर्म्मक्षये सति पुनराबर्त्तिनो भूमौ पुनर्जन्म लभन्ते। मामुपेत्येति पुनः कथनं दृढ़ीकरणार्थम्। अत्रेदं बोध्यं—पञ्चाग्निबिद्यया महाहबमरणादिना ये ब्रह्मलोकं गतास्तेषां भोगान्ते पातः स्यात् ; ये तु सनिष्ठाः परेशभक्ताः स्वर्गादिलोकान् क्रमेणानुभवन्तस्तत्र गतास्तेषां तु न तस्मात् पातः, किन्तु तल्लोकबिनाशे तत्पतिना सह परेशलोकप्राप्तिरेव—"ब्रह्मणा सह ते सर्व्वे संप्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रबिशन्ति परं पदम् ॥" इति स्मरणादिति ॥१६॥

**सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ।**
**रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥१७॥**

सारा०ब०--ननु "अमृतं क्षेममभयं त्रिमुर्द्ध्नोऽधायि मूर्द्धसु" इति ( भा २ । ६ । १६ ) द्वितीयस्कन्धोक्त्या, केषाञ्चिन्मते ब्रह्मलोकस्य अभयत्वश्रवणात्, सन्न्यासिभिरपि जिगमिषितत्वात् तत्रत्यानां पातो न सम्भाव्यते ? मैवम्, तल्लोकस्वामिनो ब्रह्मणोऽपि पातः स्यात् किमुतान्येषाम् इति व्यञ्जयन्नाह-- सहस्रं युगानि पर्य्यन्तोऽवसानं यस्य तद्ब्रह्मणोऽहर्दिनं यद्ये शास्त्राभिज्ञा विदुर्जानन्ति, तेऽहोरात्रविदो जनाः रात्रिमपि तस्य युगसहस्रान्तां विदुः। तेन तादृशाहोरात्रैः पक्षमासादिक्रमेण वर्षशतं ब्रह्मणः परमायुरिति। एतदन्ते तस्यापि पातो न कस्यचिद्वैष्णवस्य, तस्य ब्रह्मणो मोक्षश्चेति व्यञ्जितम् ॥ १७॥

गी०भू०—स्वर्गादयः सत्यान्ताः सर्व्वे लोकाः कालपरिच्छिन्नत्वाद्विनश्यन्तीति भावेनाह–सहस्रेति । यद्ये ब्रह्मणश्चतुर्म्मुखस्याहर्दिनं नृमाणेन सहस्रयुगपर्य्यन्तं विदुः—"चतुर्युगसहस्रन्तु ब्रह्मणो दिनमुच्यते" इति स्मृतेः। सहस्रं चतुर्युगानि पर्य्यन्तोऽवसानं यस्य तत्, तस्य रात्रिञ्च चतुर्युगसहस्रान्तां विदुस्त एव योगिनो जना अहोरात्रविदो भवन्ति ; न त्वन्ये चन्द्रार्कगतिविदो महर्लोकादिस्थितानामुपलक्षणमेतत् । अयमर्थः,—नृणां वर्षं देवानामहोरात्रं तादृशैरहोरात्रैः पक्षमासादिगणनया द्वादशभिर्वर्षसहस्रैश्चतुर्युगं चतुर्युगानां सहस्रन्तु ब्रह्मणो दिनं रात्रिश्च तावत्येव तादृशैश्चाहोरात्रैः पक्षादिगणनया वर्षशतं तस्य परमायुरिति ; तदन्ते तल्लोकस्य तद्वर्त्तिनाञ्च विनाशादावृत्तिः सिद्धेति ॥१७॥

अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥१८॥

सारा०ब०--ये तु ततोऽर्व्वाचीनास्त्रिलोकस्थास्तेषांस्तु तस्याहन्यहन्यपि पात इत्याह–अव्यक्तादिति । "अत्र दैनन्दिनसृष्टिप्रलययोराकाशादीनां सत्त्वादव्यक्तशब्देन स्वापापरस्थः प्रजापतिरेवोच्यते" इति मधुसूदनसरस्वतीपादाः ततश्च अव्यक्तात् स्वपापरस्थात् प्रजापतेः सकाशाद्व्यक्तयः शरीरविषयादिरूपा भोगभूमयो भवन्ति व्यवहारक्षमाः स्युः । रात्र्यागमे तस्य स्वापकाले प्रलीयन्ते तस्मिन्नेव तिरोभवन्ति ॥ १८ ॥

गी०भू०—ये तु तस्मादर्व्वाचीनास्त्रिलोकीवर्त्तिनस्तेषां ब्रह्मणो दिने पातः स्यादित्याह–अव्यक्तादिति । अहरागमे ब्रह्मणो जागरसमये अव्यक्तात् स्वापावस्थात् तस्मात् सर्व्वाः शरीरेन्द्रियभोग्यभोगस्थानरूपा व्यक्तयः प्रभवन्त्युत्पद्यन्ते । रात्र्यागमे तस्य स्वापसमये तत्रैव ब्रह्मण्यव्यक्तसंज्ञके स्वापावस्थे कारणे ताः प्रलीयन्ते तिरोभवन्ति। अत्राव्यक्त-शब्देन प्रधानं नाभिधेयं—दैनन्दिनसृष्टिप्रलययोरुपक्रमात् , तदा वियदादीनां स्थितत्वाच्च ; किन्तु स्वापावस्थो ब्रह्मैव तस्यार्थः ॥१८॥

भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥१९॥

सारा०ब०–एवमेव भूतानां चराचरप्राणिनां ग्रामः समूहः ॥१९

गी०भू०—ये प्रलीनास्ते पुनर्न भविष्यन्तीति कृतहान्याकृताभ्यागमशङ्का स्यात्तां निरस्यन्नाह–भूतेति । भूतग्रामः स्थिरचरप्राणिसमूहोऽवशः कर्म्माधीनः सन् तथा चेदृशजन्ममृत्युप्रवाहसङ्कुले प्रपञ्चेऽस्मिन् विवेकिनां वैराग्यं युक्तमित्युक्तम् ॥१९॥

परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात्सनातनः ।
यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥२०॥

सारा०ब०–तस्मादुक्तलक्षणादव्यक्तात् प्रजापतेर्हिरण्यगर्भात्

सकाशात् परः श्रेष्ठः। हिरण्यगर्भस्यापि कारणभूतो योऽन्यः खल्वव्यक्तो भावः सनातनोऽनादिः॥ २०॥

गी०भू०—तदेवं कर्म्मतन्त्राणां जन्मविनाशदर्शनेन 'आब्रह्म-भुवनात्' इत्येतद्विवृतम्। अथ मामुपेत्यैतद्विवृणोति—परस्तस्मा-दिति। तस्मादुक्तरूपादव्यक्ताद्ब्रह्मणो हिरण्यगर्भादन्यो यो भावः पदार्थःपरः श्रेष्ठस्ततोऽत्यन्तविलक्षणस्तस्योपास्य इत्यर्थः। अतिवैलक्षण्यमाह-अव्यक्त इति, आत्मविग्रहत्वात् प्रत्यक् इत्यर्थः, प्रसादितस्तु प्रत्यक्षोऽपि भवतीत्युक्तं प्राक्। सनातनोऽनादिः, स खलु हिरण्यगर्भपर्य्यन्तेषु सर्व्वेषु भूतेषु न विनश्यति॥२०॥

**अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्।**
**यं प्राप्य न निवर्तन्ते तद्धाम परमं मम॥२१॥**

सारा०ब०—पूर्व्वश्लोकोक्तमव्यक्तशब्दं व्याचष्टे—अव्यक्त इति। न क्षरतीत्यक्षरो नारायणः "एको नारायण आसीन्न ब्रह्मा न च शङ्करः" इति श्रुतेः, मम परमं धाम ब्रह्मैव मद्धाम मत्तेजोरूपम्॥ २१॥

गी०भू०—ये भावो मयेहाव्यक्त इत्यक्षर इति चोच्यते, तं वेदान्ताः परमां गतिमाहुः-"पुरुषान्न परं किञ्चित् सा काष्ठा परमा गतिः" इत्यादौ। यं भावं प्राप्योपेत्य जनाः पुनर्न निवर्त्तन्ते जन्म नाप्नुवन्ति, स भावोऽहमेवेत्याह-तदिति। तन्ममैव धाम स्वरूपं परमं श्रीमत्-षष्ठीयं चैतन्यमात्मनः स्वरूपमितिवदव-गन्तव्या॥२१॥

**पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया।**
**यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम्॥२२॥**

सारा०ब०—स च मदंशः परमः पुरुषः, न विद्यतेऽन्यत्



कर्म्मज्ञानयोगकामनादिकं यस्यां तयैव। अतएव पूर्व्वं मयोक्तम् -'अनन्यचेताः सततम्' इति भावः॥ २२॥

गी०भू०—तत्प्राप्तौ भक्तेः सूपायत्वमाह-पुरुषः स इति। स मल्लक्षणः पुरुषोऽनन्यया तदेकान्तया 'अनन्यचेताः सततम्' इति पूर्व्वोदितया भक्त्यैव लभ्यो लब्धुं शक्यो-योगभक्त्या तु दुःशक्या तत्प्राप्तिरित्यर्थः। तल्लक्षणमाह-यस्येति। सर्व्वमिदं जगत् येन ततं व्याप्तम्; श्रुतिश्चैवमाह-"एको वशी सर्व्वगः कृष्ण ईड्य एकोऽपि सन् बहुधा योऽवभाति वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्व्वम्" इत्याद्या॥२२॥

**यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः।**
**प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ॥२३॥**

सारा०ब०—ननु 'यं प्राप्य न निवर्त्तन्ते तद्धाम परमं मम' इति त्वदुक्त्या त्वद्भक्तास्त्वां प्राप्ता न पुनरावर्त्तन्त इत्युक्तं, न तत्र त्वत्प्राप्तौ कश्चिन्मार्गनियम इत्युक्तः, त्वद्भक्तानाञ्च गुणा-तीतत्वात्तन्मार्गोऽपि गुणातीत एवावसीयते, न तु सात्त्विको-ऽर्च्चिरादिः, यस्तु मार्गो योगिनो ज्ञानिनः कर्म्मिणश्चास्ति, तमहं जिज्ञासे इत्यपेक्षायामाह-यत्रेति। प्राणोत्क्रमणानन्तरं तत्र काले कालोपलक्षिते मार्गे प्रयाता अनावृत्तिमावृत्तिञ्च यान्ति तं कालं मार्गं वक्ष्य इत्यन्वयः॥ २३॥

गी०भू०—स्वभक्तानामनावृत्तिः स्वविमुखानां त्वावृत्तिरुक्ता, सा सा च केन पथा गतानां भवेदित्यपेक्षायामाह-यत्रेति। योगिनो भक्ताः काम्यकर्म्मिणश्च। अत्र 'काल'शब्देन कालाभि-मानिनो देवताक्ता, अग्निधूमयोः कालत्वाभावात् 'काल'शब्दे-नोक्तिस्तु भूयसा महदादिशब्दानां रात्र्यादिशब्दानाञ्च काल-वाचित्वात् तथाचार्च्चिरादिभिर्धूमादिभिश्च देवैः पालितः पन्थाः

'काल'शब्देनोक्तो बोध्यः ॥२३॥

**अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।**
**तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥२४॥**

सारा०ब०—अत्रानावृत्तिमार्गमाह—अग्निरिति । अग्निज्योतिःशब्दाभ्यां "तेऽर्च्चिषमभिसम्भवन्ति" इति श्रुत्युक्तया अर्च्चिरभिमानिनी देवतोपलक्ष्यते । अहरित्यहरभिमानिनी, शुक्ल इति पक्षाभिमानिनी, उत्तरायणरूपाः षण्मासा इत्युत्तरायणाभिमानिनी देवता, एतद्रूपो यो मार्गस्तत्र प्रयाता ब्रह्मविदो ज्ञानिनो ब्रह्म प्राप्नुवन्ति । तथा च श्रुतिः "तेऽर्च्चिषमभिसम्भवन्त्यर्च्चिषोऽहरह्न आपूर्य्यमाणपक्षमापूर्य्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकम्' इति ॥ २४ ॥

गी०भू०—तत्रानावृत्तिपथमाह—अग्निरिति । अग्निज्योतिःशब्दाभ्यां श्रुत्युक्तोऽर्च्चिरभिमानी देव उपलक्ष्यते, अहरिति दिवसाभिमानी, शुक्ल इति शुक्लपक्षाभिमानी, षण्मासा उत्तरायणमिति, षण्मासात्मकोत्तरायणाभिमानी । एतच्चान्येषां सम्वत्सरादीनां श्रुत्युक्तानामुपलक्षणम् । छान्दोग्याः पठन्ति—"अथ यदु चैवास्मिन् शव्यं कुर्व्वन्ति यदि च नार्च्चिषमेवाभिसंभवन्त्यर्च्चिषोऽहरह्न आपूर्य्यमाणपक्षमापूर्य्यमाणपक्षाद्यान् षडुदङेति मासांस्तान्मासेभ्यः सम्वत्सरं सम्वत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो वैद्युतं तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमान इमं मानवमावर्त्तं नावर्त्तन्ते" इति । अस्यार्थः—अस्मिन्नर्च्चिस्थब्रह्मोपासकगणे मृते सति यदि पुत्रशिष्यादयः शव्यं शवसम्बन्धि कर्म्म दाहादि कुर्व्वन्ति, यदि च न कुर्व्वन्ति, उभयथाप्यक्षतोपास्तिफलास्ते तदुपासका अर्च्चिरादिभिर्देवैस्तमुपास्यं प्रयान्तीति -- स्फुटमन्यत् । अत्र सम्वत्सरादित्ययोर्मध्ये वायुलोको निवेश्यः, विद्युतः परत्र क्रमाद्वरुणेन्द्रप्रजापतयो बोध्याः, श्रुत्यन्तरादित्याकरे विस्तरः । अमानवो नित्यपार्षदः परेशस्य हरेः पुरुषः । एतेऽर्च्चिरादयो देवा इत्याह सूत्रकारः—"आतिवाहिकास्तल्लिङ्गात्" इति । तथार्च्चिरादिभिर्भगवन्निदेशस्थैर्द्वादशभिर्देवैः सेव्यमानेन पथा भगवन्तं तद्भक्ताः प्रयान्ति ततः पुनर्नावर्त्तन्त इति । एवमुक्तं निर्णेतृभिः—"अर्च्चिर्दिनसितपक्षैरहोत्तरायणशरन्मरुद्रविभिः । विधुविद्युद्वरुणेन्द्रद्रुहिणैश्चागात् पदं हरेर्मुक्तः" इति ॥" ॥२४॥



**धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।**
**तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्त्तते ॥२५॥**

सारा०ब०—कर्म्मिणामावृत्तिमार्गमाह—धूम इति । धूमाभिमानिनी देवता, रात्र्यादिशब्दैश्च पूर्व्ववदेव तत्तदभिमानिन्यस्तिस्रो देवता लक्ष्यन्ते । एताभिर्देवताभिरुपलक्षितो यो मार्गस्तत्र प्रयातः कर्म्मयोगी चान्द्रमसं ज्योतिस्तदुपलक्षितं स्वर्गलोकं प्राप्य तत्र कर्म्मफलं भुक्त्वा निवर्त्तते पुनरावर्त्तते ॥ २५ ॥

गी०भू०—अथावृत्तिपथमाह—धूमो रात्रिरिति । तत्रापि पूर्व्ववत् धूमरात्रिकृष्णपक्षषण्मासात्मकदक्षिणायनानामभिमानिनो देवा लक्ष्याः, सम्वत्सरपितृलोकाकाशचन्द्रमसां श्रुत्युक्तानामुपलक्षणमेतत् । छान्दोग्याः पठन्ति—"अथ य इमे ग्रामे इष्टापूर्त्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति । धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान् षड्दक्षिणेति मासांस्तानेतेभ्यः संवत्सरमभिप्राप्नुवन्ति, मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमराजा तद्देवानामन्नं तं देवा भक्षयन्ति तस्मिन् यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्त्तन्ते" इति । तथा च धूमादिभिः परेशनिदेशस्थैरष्टभिर्देवैः पालितेन पथा काम्यकर्म्मिण-

श्चन्द्रलोकं प्राप्य भोगक्षये सति तस्मात् पुनर्निबर्त्तन्ते इति ।।२५।।

**शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।**
**एकया यात्यनावृत्तिमन्ययावर्तते पुनः ।।२६।।**

सारा०ब०—उक्तौ मार्गावुपसंहरति–शुक्लकृष्णे इति। शाश्वते अनादी, संसारस्यानादित्वात्, एकया शुक्लयाऽनावृत्तिं मोक्ष-मन्यया कृष्णयाऽऽबर्त्तते पुनः पुनरत्र जायते ।। २६ ।।

गी०भू०––उक्तौ पन्थानावुपसंहरति–शुक्लेति । अर्चिरादि-र्गतिः शुक्ला प्रकाशमयत्वात् धूमादिका गतिः कृष्णा प्रकाश-शून्यत्वात्। गतिः पस्थाः एते गतो ज्ञानकर्म्माधिकारिणो जगतः शाश्वते अनादी सम्मते तस्यानादित्वात्। स्फुटमन्यत् ।।२६।।

**नैते सृती पार्थ जानन्योगी मुह्यति कश्चन ।**
**तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ।।२७।।**

सारा०व०—–एतन्मार्गद्वयज्ञानं बिवेकोत्पादकमतस्तद्वन्तं स्तौति नैते इति। योगयुक्तः समाहितचित्तो भव ।। २७ ।।

गी०भू०––एतयोः पथोर्बोधो बिवेकहेतुर्भवतीति तं स्तौति–नैत इति । सृती पन्थानौ जानन् अर्चिरादिर्मोक्षाय धूमादिः संसारायेति स्मरन् कश्चिदपि योगी मद्भक्तो न मुह्यति–धूमादि-प्रापकं कर्म्म कर्त्तव्यत्वेन न निश्चिनोतीत्यर्थः। योगयुक्तः समाधि-निष्ठो भवापुनरावृत्तये ।।२७।।

**वेदेषु यज्ञेषु तपःसु चैव**
**दानेषु यत्पुण्यफलं प्रदिष्टम् ।**
**अत्येति तत्सर्वमिदं विदित्वा**
**योगी परं स्थानमुपैति चाद्यम् ।।२८।।**



इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्म पर्व्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्री कृष्णार्जुनसंवादे तारकब्रह्म-योगो नामाष्टमोऽध्यायः।



सारा०ब०—एतदध्यायोक्तार्थज्ञानफलमाह-वेदेष्विति । तत् सर्व्वमत्येति, अतिक्रम्य च योगी भक्तमान्, ततोऽपि श्रेष्ठं स्थानमाद्यमप्राकृतं नित्यं प्राप्नोति ।। २८ ।।

भक्तानां सर्व्वतः श्रैष्ठ्यं पूर्व्वोक्तं तेष्वपि स्फुटम् ।
अनन्यभक्तस्येत्यर्थोऽत्राध्याये व्यञ्जितोऽभवत् ।। (२)
इति सारार्थवर्षिण्यां हर्षिण्यां भक्तचेतसाम् ।
श्रीगीतास्वष्टमोऽध्यायः सङ्गतः सङ्गतः सताम् ।। (३)



गी०भू०––सप्तमाष्टमाध्यायद्वय-ज्ञानप्रकारमाह––वेदेष्विति। वेदेषु ब्रह्मचर्य्यगुरुशुश्रूषणादिविधिना सम्यगधीतेषु सर्व्वा-ङ्गोपसंहारेण सम्यगनुष्ठितेषु, तपःसु शास्त्रोक्तेन बिधिना सम्यक् चरितेषु, दानेषु देशकालपात्रपरीक्षया श्रद्धया च सम्यग्दत्तेषु यत् पुण्यफलं स्वर्गराज्यादिलक्षणं प्रदिष्टमुक्तम । तत् सर्व्वं अत्येत्यतिक्रमति। किं कृत्वेत्याह–इदमिति। इदमध्यायद्वयोक्तं भगवतो मम मद्भक्तेश्च माहात्म्यं सत्प्रसङ्गेन बिदित्वा तद्वेदन-सुखातिरिक्तं तत् सर्व्वं तृणाय मन्यत इत्यर्थः । ततो योगी मद्भक्तिमान् भूत्वाद्यमनादिपरममायिकं मत्स्थानमुपैति ।।२८।।

कृष्णांशः पुरुषो योगभक्त्या लभ्योऽर्चिरादिभिः ।
कृष्णस्त्वनन्यभक्त्यैवेत्यष्टमस्य बिनिर्णयः ।।

इति श्रीमद्भगवद्गीतोपनिषद्भाष्येऽष्टमोऽध्यायः ।



# नवमोऽध्यायः

श्रीभगवानुवाच--

इदं तु ते गुह्यतं प्रवयाद्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोदयसेऽशुभात ॥१॥

सारा०ब०---आराध्यत्वे प्रभोर्दामैरैश्वर्य्यं यदपेक्षितम् ।
ततशुद्धभक्तेरुतकर्षश्चोच्यते नबमे स्फुटम् ॥ (१)

कर्म्मज्ञानयोगादिभ्यः सकाशात् भक्तेरेव उत्कर्षः। सा च भक्तिः 'प्रधानीभूता' 'केबला' चेति सप्तमाष्टमयोरुक्तम्। तत्रापि केबलाया अतिप्रबलाया ज्ञानबदन्तःकरणशुद्ध्याद्यनपेक्षिण्या भक्तेः स्पष्टतया एव सर्व्वोतकर्षः। तस्यामर्पोत्तितमैश्वर्य्यञ्च बक्तुं नवमोऽयमध्याय आरभ्यते। सर्व्वशास्त्रसार--भूतस्य गीताशास्त्रस्यापि मध्यममध्यायाष्टकमेव ( मध्यममध्यायषट्कमेव ) सारम्, तस्यापि मध्यमौ नवमदशमावेव साराविव्यतोऽत्र निरूपयिष्यमाणमर्थं स्तौति–इदन्त्विवति त्रिभिः। द्वितीयतृतीयाध्यायादिपु यदुक्तं मोक्षोपयोगिज्ञानं 'गुह्यम्', सप्तमाष्टमयोर्मतप्राप्त्यु पयोगि-ज्ञानम्-ज्ञायतेऽनेन भगवत्तत्त्वमिति ज्ञानं भक्तितत्त्वम्' गुह्यतरं, अत्र तु केवलशुद्धभक्तिलक्षणं ज्ञानं 'गुह्यतमं' प्रकर्षेणैव तुभ्यं बदयामि। अत्र तु ज्ञान-शब्देन भक्तिरवश्यं व्याख्येया, न तु प्रथमषट्कोक्तं प्रसिद्धं ज्ञानम्, परश्लोकेऽव्ययमनश्वरमिति बिशेषणदानाद्गुणातीतत्वलाभाद्गुणातीता भक्तिरेव, न तु ज्ञानम्, तस्य सात्त्विकत्वात। 'अश्रद्दधानाः पुरुषा धर्म्मस्यास्य' इत्यग्रिमश्लोके धर्म्मशब्देनापि भक्तिरेवोच्यते । अनसूयवेऽमत्सरायेत्यन्योऽपीदममत्सरायैबोपदिशेदिति विधि-



र्व्यञ्जितः। बिज्ञानसहितं मदपरोक्षानुभवपर्य्यन्तमित्यर्थः। अशुभात् संसाराद्भक्तिप्रतिबन्धकादन्तरायाद्वा ॥ १ ॥

गी०भू०—भक्त्युद्दीप्तिकरं स्वस्य पारमैश्वर्य्यमद्भुतम् ।
स्वभक्तेश्च महोत्कर्षं नवमे हरिरूचिवान् ॥

गी०भू०---विज्ञानानन्दघनोऽसंख्येयकल्याणगुणरत्नालयः सर्व्वेश्वरोऽहं शुद्धभक्तिसुलभ इति सप्तमादिभ्यामभिधायेदानीं भक्तेरुद्दीपकं निजैश्वर्य्यं तस्याः प्रभावं चाभिधास्यन्नादौ तां स्तौति—इदमिति त्रिभिः। इदं ज्ञानं मत्कीर्त्तनादिलक्षणभक्तिरूपम्–परत्र 'धर्म्मस्यास्य' इत्युक्तेः कीर्त्तनादेश्चिच्छक्तिवृत्तित्वात्, 'ज्ञायतेऽनेन इति निरुक्तेश्च, तत् किल गुह्यतमम् । द्वितीयादावुपदिष्टं मदैश्वर्य्यज्ञानं गुह्यतरं, नवमादावुपदेश्यं तु केबलभक्तिलक्षणमिदं ज्ञानं गुह्यतममित्यर्थः । तच्च बिज्ञानसहितं मदनुभवावसानं ते बदयामि। कीदृशायेत्याह–अनसूयव इति। मद्गुणेषु दोषारोप-रहिताय दुर्गमस्य स्वरहस्यस्यानुकम्पयोपदेष्टरि मयि निजैश्वर्य्यप्रख्यापनेनात्मानं प्रशंससीति दोषदृष्टिशून्यायेत्यर्थः। तेनान्योऽप्येतदनसूयं प्रति ब्रूयादिति दर्शितम्। यज्ज्ञात्वा त्वमशुभान् संसारान्मोक्ष्यसे ॥२॥

राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥२॥

सारा०ब०—किञ्च, इदं ज्ञानं राजविद्या, विद्या उपासना बिविधा एव भक्तयः, तासां राजा राजदन्तादित्वात परनिपातः। गुह्यानां राजेति भक्तिमात्रमेवातिगुह्यं तस्य बहुविधस्यापि राजेत्यतिगुह्यतमं पबित्रमिदमिति सर्व्वपापप्रायश्चित्तात्त्वात्। त्वं--पदार्थज्ञानाच्च सकाशादपि पाबित्र्यकरम्। अनेकजन्मसहस्र-

सञ्चितानां सर्व्वेषामपि पापानां स्थूलसूक्ष्मावस्थानां तत्कारणस्याज्ञानस्य च सद्य एवोच्छेदकम्, अतः सर्व्वोत्तमं पावनमिदमेवेति मधुसूदनसरस्वतीपादाः। प्रत्यक्ष एवावगमोऽनुभवो यस्य तत्। "भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एककालः। प्रपद्यमानस्य यथाश्नतः स्युस्तुष्टिः पुष्टिः क्षुदपायोऽनुघासम् ॥" इत्येकादशोक्तेः प्रतिपदमेव भजनानुरूपभगवदनुभवलाभात्। धर्म्यं धर्म्मादनपेतं सर्व्वधर्म्माकरणेऽपि सर्व्वधर्म्मसिद्धेः "यथा तरोर्मूलनिषेचनेन, तृप्यन्ति तत्स्कन्धभुजोपशाखाः। प्राणोपहाराच्च यथेन्द्रियाणां, तथैव सर्व्वार्हणमच्युतेज्या ॥" इति नारदोक्तेः। कर्त्तुं सुसुखमिति कर्म्मज्ञानादाविव नात्र कोऽपि कायवाङ्मानस--क्लेशातिशयः, श्रवण--कीर्त्तनादिभक्तेः श्रोत्रादीन्द्रियव्यापारमात्रत्वादव्ययं कर्म्मज्ञानादिवन्न नश्वरं निर्गुणत्वात् ॥ २ ॥

गी०भू०—राजविद्येति । विद्यानां शाण्डिल्यवैश्वानरदहरादिशब्दपूर्व्वाणां राजा राजविद्या, गुह्यानां जीवात्मयाथात्म्यादिरहस्यानां राजा राजगुह्यमिदं भक्तिरूपं ज्ञानम्–"राजदन्तादित्वादुपसर्ज्जनस्य परनिपातः।" तथात्वं प्रतिपादयितुं विशिनष्टि–उत्तमं पवित्रं लिङ्गदेहपर्य्यन्तसर्व्वपापप्रशमनात्, यदुक्तं पाद्मे–"अप्रारब्धफलं पापं कूटं बीजं फलोन्मुखम्। क्रमेणैव प्रलीयन्ते विष्णुभक्तिरतात्मनाम् ॥" इति। क्रमोऽत्र पर्णशतकवेधवद्बोध्यः। प्रत्यक्षावगमम्–अवगम्यत इत्यवगमो विषयः, स यस्मिन् प्रत्यक्षोऽस्ति–श्रवणादिकेऽभ्यस्यमाने तस्मिंस्तद्विषयः पुरुषोत्तमोऽहमाविर्भवामि, एवमाह सूत्रकारः–"प्रकाशश्च कर्म्मण्यभ्यासात्" इति । धर्म्म्यं धर्म्मादनपेतं गुरुशुश्रूषादिधर्म्मैर्नित्यं पुष्यमाणम्, श्रुतिश्च–"आचार्य्यवान् पुरुषो वेद" इत्याद्या । कर्त्तुं सुसुखं सुखसाध्यम्–श्रोत्रादिव्यापारमात्रत्वात् तुलसी-



पात्राम्बुचुलुकमात्रोपकरणत्वाच्च । अव्ययमविनाशि–मोक्षेऽपि तस्यानुवृत्तेः। एवं वक्ष्यति–'भक्त्या मामभिजानाति' इत्यादिना, कर्म्मयोगादिकं तु नेदृशमतोऽस्य राजविद्यात्वम्, तत्राहुः–राज्ञां विद्या, राज्ञां गुह्यमिति राज्ञामिवोदारचेतसां कारुणिकानामिव दिवमपि तुच्छीकुर्व्वतामियं विद्या, न तु शीघ्रं पुत्रादिलिप्सया देवानभ्यर्च्चतां दीनचेतसां कर्म्मिणाम्, राजानो हि महारत्नादिसम्पदप्यनिह्नुवानाः स्वमन्त्रं यथातियत्नान्निह्नुयते तथान्यां विद्यामनिह्नुवाना मद्भक्ता एतामतियत्नान्निह्नुवीरन्निति, समानमन्यत् ॥२॥

अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप ।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥३॥

सारा०व०—नन्वेवमस्य धर्म्मस्यातिसुकरत्वे सति को नाम संसारी स्यात्? तत्राह—अश्रद्दधानाः। अस्येति कर्म्मणि षष्ठी आर्षी। इमं धर्म्ममश्रद्दधानाः शास्त्रवाक्यैः प्रतिपादितं भक्तेः सर्व्वोत्कर्षं स्तुत्यर्थवादमेव मन्यमाना आस्तिक्येन न स्वीकुर्व्वन्ति ये, त उपायान्तरैर्मत्प्राप्तये कृतप्रयत्ना अपि मामप्राप्य मृत्युव्याप्ते संसारवर्त्मनि नितरामतिशयेन वर्त्तन्ते ॥ ३ ॥

गी०भू०—नन्वेवं सुकरे धर्म्मे स्थिते न कोऽपि संसरेदिति चेत्तत्राह–अश्रद्दधाना इति । धर्म्मस्येति कर्म्मणि षष्ठी । इमं मद्भक्तिलक्षणं धर्म्मं श्रुत्यादिप्रसिद्धप्रभावमप्यश्रद्दधाना दृढविश्वासेन तमगृह्णन्तः स्तुतिमात्रमेवैतदिति ये मन्यन्ते, ते मत्प्राप्तये साधनान्तराण्यनुतिष्ठन्तोऽपि भक्त्यवहेलनान्मामप्राप्य मृत्युयुक्ते संसारवर्त्मनि नितरां वर्त्तन्ते ॥३॥

मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥४॥

सारा०ब०—मद्दास्यभक्तावेतन्मात्रं मदैश्वर्य्यज्ञानं मद्भक्तैरपेक्षितव्यमित्याह सप्तभिः। अव्यक्ता अतीन्द्रिया मूर्त्तिः स्वरूपं यस्य तेन मया कारणभूतेन सर्व्वमिदं जगत् ततं व्याप्तम्। अतएव मत्स्थानि मयि कारणभूते पूर्णचैतन्यस्वरूपे स्थितानि सर्व्वाणि भूतानि चराचराणि सन्ति। एवमपि घटादिषु स्वकार्य्येषु मृदादिवत्तेषु भूतेषु नाहमवस्थितोऽसङ्गत्वात्॥ ४॥

गी०भू०—अथ स्वभक्त्युद्दीपकमद्भुत-स्वैश्वर्य्यमाह–मयेति। अव्यक्ता इन्द्रियाग्राह्या मूर्त्तिः स्वरूपं यस्य तेन मया सर्व्वमिदं जगत्ततं धर्त्तुं नियन्तुं च व्याप्तम्। अतएव सर्व्वाणि चराचराणि भूतानि व्यापके धारके नियामके च मयि स्थितानि भवन्तीति तेषां स्थितिर्मदधीना, तेषु सर्व्वेषु भूतेष्वहं न चावस्थितो मम स्थितिस्तदधीना नेत्यर्थः। इह निखिलजगदन्तर्यामिणा स्वांशेनान्तः प्रविश्य नियच्छामि दधामि चेत्युक्तम्, आह चैवं श्रुतिः–"यः पृथिव्यां तिष्ठन्" इत्यादिना, इहापि वक्ष्यति–'विष्टभ्याहमिदं कृत्स्नम्' इत्यादि॥४॥

**न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्।**
**भूतभृन्न च भूतस्थो ममात्मा भूतभावनः॥५॥**

सारा०ब०—तत एव मयि स्थितान्यपि भूतानि न मत्स्थानि ममासङ्गत्वादेवेति भावः। ननु तर्हि तव जगद्व्यापकत्वं जगदाश्रयत्वञ्च पूर्व्वोक्तं विरुद्धमित्याह—पश्य मे योगमैश्वरम असाधारणं योगैश्वर्य्यमघटित--घटना--चातुर्य्यमयम्। अन्यदप्याश्चर्य्यं पश्येत्याह–भूतानि बिभर्त्ति धारयति इति भूतभृत्, भूतानि भावयति पालयतीति भूतभावनः। एवम्भूतोऽपि ममात्मा भूतस्थो न भवति ममेति भगवति देहिदेह-विभागाभावात् 'राहोः शिरः' इतिवत् अभेदेऽपि षष्ठी। अयं भावः–



यथा जीवो देहं दधत् पालयन्नपि तस्मिन्नासक्त्या देहस्थ एव भवति, एवमहं भूतानि दधत् पालयन्नपि मायिकसर्व्वभूतशरीरोऽपि न तत्रस्थो निःसङ्गत्वादिति॥ ५॥

गी०भू०--नन्वतिगुरुं भारं वहतस्ते महान खेदः स्यादिति चेत्तत्राह–न चेति। घटादावुदकादीनीव भारभूतानि च भूतानि संसृष्टानि मयि न सन्ति। तर्हि मत्स्थानि सर्व्वभूतानीत्युक्तिविरुद्धेति चेत्तत्राह–पश्येति। ममैश्वरं मदसाधारणं योगं पश्य जानीहि–"युज्यतेऽनेन दुर्घटेषु कार्य्येषु" इति निरुक्तेर्योगोऽविचिन्त्यशक्तिवपुः सत्यसङ्कल्पता-लक्षणो धर्म्मस्तमित्यर्थः। एतदेव विस्फुटयति–भूतभृदिति भूतभृत् भूतानां धारकः पालकश्चाहं भूतस्थो भूतसंपृक्तो नैव भवामि, यतो ममात्मा मन एव भूतभावनः सत्यसङ्कल्पता-लक्षणेनैश्वरेण योगेनैवाहं भूतानां धारणं पालनञ्च करोमि, न तु स्वमूर्त्तिव्यापारेणेत्यर्थः। श्रुतिश्चैवमाह–"एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्य्याचन्द्रमसौ विधृतौ तिष्ठत एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः" इत्यादिना। यद्यपि स्वरूपान्न मनो भिन्नं, तथापि सत्ता सतीत्यादिवद्विशेषाद्वास्तवं भेदकार्य्यमादायैव तथोक्तं बोध्यम्॥५॥

**यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान्।**
**तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय॥६॥**

सारा०ब०—असङ्गे मयि भूतानि स्थितान्यपि न स्थितानि तेष्वपि अहं स्थितोऽपि न स्थित इत्यत्र दृष्टान्तमाह–यथेति। यथैवासङ्गस्वभावे आकाशे स्थितो नित्यं वातीति वायुः सर्व्वदा चलनस्वभावः, अतएव सर्व्वत्र गच्छतीति सर्व्वत्रगः, महान् परिमाणतः यथा स्वाकाशस्य असङ्गत्वात् तत्र स्थितोऽपि न

स्थितः, आकाशोऽपि बायौ स्थितोऽपि न स्थितोऽसङ्गत्वात् एव, तथैव असङ्गस्वभावे मयि सर्व्वाणि भूतानि आकाशादीनि महान्ति सर्व्वत्रगानि स्थितानि नापि स्थितानि इत्युपधारय बिमृश्य निश्चिनु। ननु तर्हि "पश्य मे योगमैश्वरम्" इति भगबदुक्तं योगैश्वर्य्यस्यातर्क्यत्वं कथं सिद्धमभूत दृष्टान्तलाभात्? उच्यते- आकाशस्य जड़त्वादेवासङ्गत्वम्, चेतनस्य तु असङ्गत्वं जगदधिष्ठानाधिष्ठातृत्वे परमेश्वरं बिना नान्यत्रास्तीत्यतर्कयत्वं सिद्धमेव, तदप्याकाशदृष्टान्तो लोकबुद्धिप्रवेशार्थ एव ज्ञेयः ॥ ६ ॥

गी०भू०—चराचराणां सर्व्वेषां भूतानां मत्संकल्पायत्ता स्थितिर्बृत्तिश्चेत्यत्र दृष्टान्तमाह-यथेति। यथा निरालम्बे महत्याकाशे निरालम्बो महान् बायुः स्थितः सर्व्वत्र गच्छति, तस्य च निरालम्बतया स्थितिर्मत्सङ्कल्पादेव प्रबृत्तिश्चेत्यन्तर्य्यामिब्राह्मणात्-"यद्भीषा बातः पवते" इति श्रुत्यन्तराच्चोपधारयेति, तथा सर्व्वाणि स्थिरचराणि भूतानि मत्स्थानि तैरसंसृष्टे मयि स्थितानि मयैव सङ्कल्पमात्रेण धृतानि नियमितानि चेत्युपधारय, अन्यथा आकाशादीनि बिभ्रंशेरन्निति ॥६॥

सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥७॥

सारा०ब०—ननु अधुना दृश्यमानानि एतानि भूतानि त्वयि स्थितानि इत्यबगम्यते महाप्रलये क यास्यन्तीत्यपेक्षायामाह-सर्व्वेति। मामिकां मदीयां मम त्रिगुणात्मिकायां मायाशक्तौ लीयन्त इत्यर्थः। पुनः कल्पक्षये प्रलयान्ते सृष्टिकाले तानि बिशेषेण सृजामि ॥ ७ ॥

गी०भू०—स्वसंकल्पादेव भूतानां स्थितिरुक्ता। अथ तस्मादेव तेषां सर्गप्रलयाबाह-सर्व्वेति। हे कौन्तेय, कल्पक्षये चतुर्मुखाबसानकाले सर्व्बाणि भूतानि मत्सङ्कल्पादेव मामिकां प्रकृतिं यान्ति। प्रकृतिशक्तिके मयि बिलीयन्ते कल्पादौ पुनस्तान्यहमेव 'बहु स्याम्' इति सङ्कल्पमात्रेण वैविध्येन सृजामि ॥७॥



प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥८॥

सारा०ब०—ननु असङ्गो निर्व्विकारश्च त्वं कथं सृजसीत्यपेक्षायामाह-प्रकृतिमिति। स्वां स्वीयाम् अबष्टभ्य अधिष्ठाय प्रकृतेर्व्वशात् स्वीयस्वभावबशात् प्राचीनकर्म्मनिमित्तादिति यावत् अबशं कर्म्मादि-परतन्त्रम् ॥ ८ ॥

गी०भू०—प्रकृतिमिति। स्वामात्मीयां त्रिगुणां प्रकृतिमबष्टभ्याधिष्ठाय सङ्कल्पमात्रेण महदाद्यात्मना परिणमय्येमं चतुर्व्विधं भूतग्रामं विसृजामि पुनःपुनः काले काले। कीदृशमित्याह-प्रकृतेः प्राचीनकर्म्मवासनाया बशात् प्रभावादबशं परतन्त्रं तथा चाचिन्त्यशक्तेरसङ्गस्वभावस्य मम सङ्कल्पमात्रेण तत्तत् कुर्व्वतो न तत्संसर्गगन्धो, न च कोऽपि खेदलेश इति ॥८॥

न च मां तानि कर्माणि निबध्नन्ति धनंजय ।
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥९॥

सारा०ब०—नन्वेबञ्च नाना-कर्म्माणि कुर्व्वतस्तब जीवबद्बन्धः कथं न स्यादत आह-न चेति। तानि सृष्ट्यादीनि। कर्म्मासक्तिर्हि बन्धहेतुः, स चाप्तकामत्वान्मम नास्ति उदासीनबदिति। अन्य उदासीनो यथा बिवदमानानां दुःख-शोकादि-संसृष्टो न भवति, तथैवाहमित्यर्थः ॥ ९ ॥

गी०भू०—ननु बिषमाणि सृष्टिपालनलक्षणानि कर्म्माणि

वैषम्यादिना त्वां बध्नीयुरिति चेत्तत्राह-न चेति । तानि बिषमसृष्ट्यादीनि कर्म्माणि न मयि वैषम्यादि प्रसञ्जयन्ति । तत्र हेतुगर्भबिशेषणम्-उदासीनवदिति । जीवानां देवमानवतिर्य्यगादिभावे तत्तादभ्युदयतारतम्ये च तेषां पूर्व्वार्ज्जितानि कर्म्माण्येव कारणानि, अहं तु तेषु बिषमेषु कर्म्मस्वौदासीन्येन स्थितोऽसक्त इति न मयि वैषम्यादि-दोषगन्धः । एवमाह सूत्रकारः-"वैषम्यनैर्घृण्ये न" इत्यादिना । उदासीनत्वे कर्त्तृत्वं न सिद्ध्येदत उक्तम्-उदासीनवदिति ॥९॥

मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनानेन कौन्तेय जगद्बिपरिवर्त्तते ॥१०॥

साराबः—ननु सृष्ट्यादिकर्त्तुस्तवेदमौदासीन्यं न प्रत्येमि इत्यत आह—मयेति । अध्यक्षेण मम निमित्तभूतेन प्रकृतिः सचराचरं जगत् सूयते प्रकृतिरेव जगत् जनयति, मम अत्राध्यक्षता-मात्रम् ;—यथा कस्यचित् अम्बरीषादेरिव भूपतेः प्रकृतिभिरेब राज्यकृत्यं निर्व्वाह्यते, अत्रोदासीनस्य भूपतेः सत्तामात्रमिति यथा तस्य राजसिंहासने सत्तामात्रेण बिना प्रकृतिभिः किमपि न शक्यते कर्त्तुम, तथैव ममाधिष्ठानलक्षणमध्यक्षत्वं विना प्रकृतिरपि जड़ा किमपि कर्त्तु न शक्नोतीति भावः । अनेन मदधिष्ठानेन हेतुनेदं जगत् बिपरिबर्त्तते पुनः पुनर्जायते ॥ १० ॥

गी०भू०—तत् प्रतिपादयति-मयेति । सत्यसङ्कल्पेन प्रकृत्यध्यक्षेण मया सर्व्वेश्वरेण जीवपूर्व्वपूर्व्वकर्म्मानुगुणतया बीक्षिता प्रकृतिः सचराचरं जगत् सूयते जनयति बिषमगुणा सती-अनेन जीवपूर्व्वकर्म्मानुगुणेन मद्बीक्षणेन हेतुना तज्जगद्बिपरिबर्त्तते पुनः पुनरुद्भवति । हे कौन्तेय ! श्रुतिश्चैवमाह-"विकारजननीमज्ञामष्टरूपामजां ध्रुवाम् । ध्यायतेऽध्यासिता तेन तन्यते प्रेरिता



पुनः । सूयते पुरुषार्थञ्च तेनैवाधिष्ठिता जगत् ॥" इति सन्निधिमात्रेणाधिष्ठातृत्वात् कर्त्तृत्वमुदासीनिञ्च न बिरुद्धम । 'यथा सन्निधिमात्रेण गन्धः क्षोभाय जायते"इत्यादि स्मरणाच्चैतदेवं मदधिष्ठातृमात्रं खलु प्रकृतेरपेक्ष्यम । मद्बिना किमपि कर्त्तु न सा प्रभवेत्-न ह्यसति राज्ञः सिंहासनाधिष्ठातृत्वे तदमात्याः कार्य्ये प्रभवः ॥१०॥

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥११॥

साराबः—ननु च, सत्यमनन्तकोटीब्रह्माण्डव्यापी सच्चिदानन्दबिग्रहः कारणार्णबशायी महापुरुषः स्वप्रकृत्या जगत् सृजतीति यः प्रसिद्धः, स एब हि भवान् ; किन्तु बसुदेवसूनोस्तवेयं मानुषी तनुरित्येतदंशेनैब केचित्तब निकर्षं बदन्तीत्यत आह-अबजानन्तीति । मम मानुष्यास्तनोरस्याः परं भावं कारणार्णबशायिमहापुरुषादिभ्योऽप्युत्कृष्टं स्वरूपमजानन्त एब ते । कीदृशम ? भूतं सत्यं यद्ब्रह्म, तच्च तन्महेश्वरञ्चेति, तन्महेश्वरपदं सत्यान्तरव्याबर्त्तकमत्र ज्ञेयम--"युक्ते क्ष्मादावृते भूतम" इत्यमरः । "तमेकं गोविन्दं सच्चिदानन्दबिग्रहं वृन्दावनसुरभूरुहभावनासीनं सततं समरुद्गणोऽहं परमया स्तुत्या तोषयामि" इति श्रुतेः ; "नराकृति परब्रह्म" इति स्मृतेश्च, ममास्याः मानुष्यास्तनोः सच्चिदानन्दमयत्वं मदभिज्ञभक्तैरुच्यत एब, तथा सर्व्वब्रह्माण्डव्यापित्वञ्च बाल्ये मन्मात्रा श्रीयशोदया दृष्टमेव ; यद्वा, मानुषीं तनुमेब विशिनष्टि—परमुत्कृष्टं भावं सत्तां बिशुद्धं सत्त्वं सच्चिदानन्दस्वरूपमित्यर्थः । 'भावः सत्ता स्वभावाभिप्रायः" इत्यमरः । परं भावमपि बिशिनष्टि—मम भूतमहेश्वरं मम सृज्यानि भूतानि ये ब्रह्माद्यास्तेषामपि महान्त-

मीश्वरम्। तस्माज्जीवस्येव मम परमेश्वरस्य तनुर्न भिन्ना; तनुरेवाहम्, अहमेव तनुः, साक्षाद्ब्रह्मैव—"शाब्दं ब्रह्म दधद्वपुः" इति मदभिज्ञशुकोक्तेरिति भवादृशैस्तु विश्वस्यतामिति भावः ॥११

गी०भू०—नन्वीदृशमहिमानं त्वां किमिति केचिन्नाद्रियन्ते? तत्राह-अवजानन्तीति। भूतमहेश्वरं निखिलजगदेकस्वामिनं सत्यसङ्कल्पं सर्व्वज्ञं महाकारुणिकञ्च मां मूढास्तेऽवजानन्ति। अत्र प्रकारं दर्शयन् विशिनष्टि-मानुषीमिति मानुषसन्निवेशिनीं मानुषचेष्टाबहुलां तनुं श्रीमूर्त्तिमाश्रितं तादात्म्यसम्बन्धेन नित्यं प्राप्तं मामितरराजकुमारतुल्यः कश्चिदुग्रपुण्यो मनुष्योऽयमिति बुद्ध्यावमन्यन्त इत्यर्थः। मानुषी तनुः खलु पाञ्चभौतिक्येव, न च भगवत्तनुस्तादृक्-"सच्चिदानन्दरूपाय कृष्णाय" इति "तमेकं गोविन्दं सच्चिदानन्दविग्रहम्" इति श्रवणात्, तथात्वे तदवज्ञातॄणां मौढ्यान्ध्ययोगाद्ब्रह्मादिवन्द्यत्वायोगाच्च। एवंबुद्धिस्तेषां कुतो यया ते मूढा भण्यन्ते? तत्राह-परमिति, परमसाधारणं भावं स्वभावमजानन्तः मानुषाकृतेस्तस्य ज्ञानानन्दात्मत्व-सर्व्वेशत्व-मोक्षदत्वादिस्वभावानाभिज्ञानादित्यर्थः। एवञ्च सति तनुमाश्रितमित्युक्तिर्विशेषविभातं भेदकार्य्यमादाय बोध्या। यत्तु वसुदेवसूनोर्द्वारकाधिपतेः सूतिकागृहाविर्भूतमेव स्वरूपं नैजं चतुर्भुजत्वात्ततो व्रजं गच्छतः स्वरूपन्तु मानुषं द्विभुजत्वादत उक्तम्-"बभूव प्राकृतः शिशुः" इतिवत्, अस्ति तन्निरवधानम्,-'मानुषीं तनुमाश्रितम्' इति तदुक्तेः, 'तेनैव रूपेण चतुर्भुजेन' इति पार्थप्रार्थनया चतुर्भुजं तं प्रति 'दृष्ट्वेदं मानुषं रूपम्' इत्यादि पार्थवाक्याच्च तस्मान्मानुष्यसंनिवेशित्वमेव तत्तानोर्मनुष्यत्वमित्युक्तम्-"यत्रावतीर्णं कृष्णाख्यं परं ब्रह्म नराकृति" इति श्रीवैष्णवे, "गूढं परं ब्रह्म मनुष्यलिङ्गम्" इति श्रीभागवते च। मनुष्यचेष्टाप्राचुर्य्याच्च तस्यातस्त्वम्। यथा मनुष्योऽपि राजा देव-



वत सिंहवच्च विचेष्टनान्नृदेवो नृसिंहश्च व्यपदिश्यते, तस्माद्द्विभुजश्चतुर्भुजश्च स मनुष्यभावेनोक्तहेतुद्वयाद्व्यपदिश्यः न खलु भुजभूम्ना परेशत्वम्-कार्त्तवीर्य्यादौ व्यभिचारात, विभुचैतन्यत्वं जगज्जन्मादिहेतुत्वं वा परेशत्वम्, तच्च द्विभुजेऽपि तस्मिन्नस्त्येव तच्छ्रुतम्‌ न च द्विभुजत्वं सादि-"सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरम्। द्विभुजं मौनमुद्राढ्यं वनमालिनमीश्वरम" इति तस्यानादिसिद्धत्वश्रवणात् प्राकृतः शिशुरित्यत्र-प्रकृत्या स्वरूपेणैव व्यक्तः शिशुरित्येवार्थः। तस्माद्वैदूर्य्यमणौ नानारूपाणि इव तस्मिन द्विभुजत्वादीनि युगपत् सिद्धान्येव यथारुच्युपास्यानीति शान्तोदितत्व-नित्योदितत्व-कल्पना दूरोत्सारिता ॥११॥

**मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः।**
**राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥१२॥**

सारा०व०—ननु ये मानुषीं मायामयीं तनुमाश्रितोऽयमीश्वर इति मत्वा त्वामवजानन्ति, तेषां का गतिस्तत्राह-मोघाशा इति। यदि भक्ता अपि स्युस्तदपि मोघाशा भवन्ति, मत्सालोक्यादिमभिवाञ्छितं न प्राप्नुवन्ति। यदि ते कर्म्मिणस्तदा मोघकर्म्माणः कर्म्मफलं स्वर्गादिकं न लभन्ते; यदि ते ज्ञानिनस्तर्हि मोघज्ञाना ज्ञानफलं मोक्षं न विदन्ति, तर्हि ते किं प्राप्नुवन्तीत्यत आह-राक्षसीमिति। ते राक्षसीं प्रकृतिं राक्षसानां स्वभावं श्रिताः प्राप्ता भवन्तीत्यर्थः ॥ १२ ॥

गी०भू०—ननु पाञ्चभौतिक-मानुषतनुमानुग्रपुण्यः पुरुतेजाः कोऽप्ययमिति भावेन त्वामवजानतां का गतिः स्यात्तत्राह—मोघेति। यदि ते ईश्वरभक्ता अपि स्युस्तदापि मोघाशा निष्फलमोक्षवाञ्छाः स्युः, यदि तेऽग्निहोत्रादिकर्म्मनिष्ठास्तदा मोघकर्म्माणः परिश्रमरूपाग्निहोत्रादिकाः स्युः, यदि ते ज्ञानाय वेदा-

न्तादिशास्त्रपरिशीलिनस्तदा मोघज्ञाना निष्फलतद्बोधाः स्युः । एवं कुतः ? यतस्ते विचेतसः नित्यसिद्धमनुष्यसन्निवेशि-साक्षात्-परब्रह्ममदवज्ञाजनितपापप्रतिबद्धबिवेकज्ञाना इत्यर्थः । अतएव-मुक्तं बृहद्वैष्णवे-"यो वेत्ति भौतिकं देहं कृष्णस्य परमात्मनः । स सर्व्वस्माद्बहिष्कार्य्यः श्रौतस्मार्त्तविधानतः । मुखं तस्याव-लोक्यापि सचेलं स्नानमाचरेत्" इति । तर्हि ते किं फलं लभन्ते ? तत्राह-राक्षसीं हिंसादिप्रचुरां तामसीं आसुरीं कामगर्व्वादि-प्रचुरां राक्षसीं मोहिनीं बिबेकबिलोपिनीं प्रकृतिं स्वभावं श्रिता नरके निबासार्हास्तिष्ठन्ति ॥१२॥

**महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।**
**भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥१३॥**

सारा०ब०—तस्माद् ये महात्मानो यादृच्छिक-मद्भक्तिकृपया महात्मत्वं प्राप्तास्ते तु मानुषा अपि दैवीं प्रकृतिं देवानां स्वभावं प्राप्ताः सन्तो मां मानुषाकारमेव भजन्ते । न विद्यतेऽन्यत्र ज्ञानकर्म्मान्यकामनादौ मनो येषां ते । मां भूतादिं 'मया तत-मिदं सर्व्वम्', इत्यादि मदैश्वर्य्यज्ञानेन भूतानां ब्रह्मादिस्तम्बपर्य्य-न्तानां कारणम् । अव्ययं सच्चिदानन्दबिग्रहत्वादनश्वरं ज्ञात्वेति ममाराध्यत्वे मद्भक्तैरेताबन्मात्रं मज्ज्ञानमपेक्षितव्यम् । इयमेव त्वं-पदार्थज्ञानकर्म्माद्यनपेक्षा भक्तिरनन्या सर्व्वश्रेष्ठा राजविद्या राजगुह्यमिति द्रष्टव्यम् ॥ १३ ॥

गी०भू०—तर्हि के त्वामाद्रियन्ते ? तत्राह-महात्मान इति । ये नराकृतिपरब्रह्ममत्तात्त्वबित्सत्प्रसङ्गेन तादृशमन्निष्ठया बिस्ती-र्णागाधमनसो मदीयेऽपि सहस्रशीर्षाद्याकारेऽरुचयस्ते मनुष्या अपि दैवीं प्रकृतिमाश्रिताः सन्तो नराकृतिं मां मध्यभूतादिवि-धिरुद्रादि-सर्व्वकारणमव्ययं नित्यञ्च ज्ञात्वा निश्चित्य भजन्ति



सेवन्ते, अनन्यमनसो नराकार एव मयि निखातचित्ताः ॥१३॥

**सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।**
**नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥१४॥**

सारा०ब०—भजन्तीत्युक्तं तद्भजनमेव किमित्यत आह-सततं सदेति नात्र कर्म्मयोग इव कालदेशपात्रशुद्धाद्यपेक्षा कर्त्तव्येत्यर्थः,-"न देशनियमस्तत्र न कालनियमस्तथा । नोच्छि-ष्टादौ निषेधोऽस्ति श्रीहरेर्नाम्नि लुब्धक ॥" इति स्मृतेः । यतन्तो यतमानाः—यथा कुटुम्बपालनार्थं दीनाः गृहस्थाः धनिकद्वारादौ धनार्थं यतन्ते तथैव मद्भक्ताः कीर्त्तनादिभक्तिप्राप्त्यर्थं साधु-सभादौ यतन्ते, प्राप्य च, भक्तिमधीयमानं शास्त्रं पठतः इव पुनः पुनरभ्यस्यन्ति च । एताबन्ति नामग्रहणानि एतावत्यः प्रणतयः एताबत्यः परिचर्य्याश्चावश्यकर्त्तव्याः इत्येवं दृढानि ब्रतानि नियमाः येषां ते, यद्वा, दृढानि अपतितानि एकादश्यादि-ब्रतानि नियमा येषां ते । नमस्यन्तश्च इति चकारः श्रबण-पादसेवनाद्यनुक्तसर्व्वभक्तिसंग्रहार्थः । नित्ययुक्ता भाबिनं मन्नि-त्यसंयोगमाकाङ्क्षन्तः आशंसायां भूतवच्चेति बर्त्तमानेऽपि भूतकालिकः क्त-प्रत्ययः । अत्र मां कीर्त्तयन्त एव मामुपासत इति मत्कीर्त्तनादिकमेब मदुपासनमिति बाक्यार्थः । अतो मामिति न पौनरुक्त्यमाशङ्कनीयम् ॥ १४ ॥

गी०भू०—भक्तिप्रकारमाह-सततमिति द्वयेन । सततं सर्व्वदा देशकालादिबिशुद्धिनैरपेक्ष्येण मां कीर्त्तयन्तः सुधा-मधु-राणि मम कल्याणगुणकर्म्मानुबन्धीनि गोबिन्द-गोवर्द्धनोद्धरणा-दीनि नामान्युच्चैरुच्चारयन्तो मामुपासते, नमस्यन्तश्च मदर्च्चना-निकेतेपु गत्वा धूलिपङ्काप्तेपु भूतलेपु दण्डबत् प्रणिपतन्तो भक्त्या प्रीतिभरेण । कीर्त्तयन्तो मामुपासत इति मत्कीर्त्तनादिकमेव

मदुपासनमिति वाक्यार्थः। अतो मामिति न पौनरुक्त्यम्। 'च'
शब्दोऽनुक्तानां श्रवणार्च्चनवन्दनादीनां समुच्चायकः। यतन्तः
समानाशयैः साधुभिः सार्द्धं मत्स्वरूपगुणादियाथात्म्यनिर्ण-
याय यतमानाः, दृढ़व्रता दृढ़ान्यस्खलितान्येकादशीजन्माष्टम्यु-
पोषणादीनि व्रतानि येषां ते, नित्ययुक्ता भाविनं मन्नित्यसंयोगं
वाञ्छन्तः "आशंसायां भूतवच्च" इति सूत्राद्वर्त्तमानेऽपि भूत-
कालिक-'क्त'प्रत्ययः ॥१४॥

ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥१५॥

सारा०व०—तदेवं अत्राध्याये पूर्व्वाध्याये च अनन्यभक्त
एव महात्म-शब्दवाच्यः, आर्त्तादिसर्व्वभक्तेभ्यः श्रेष्ठ इति
दर्शितम्। अथान्येऽपि अनुक्तपूर्व्वा ये त्रिविधा भक्ताः पूर्व्वतो
न्यूनाः अहंग्रहोपासकाः प्रतीकोपासका विश्व-रूपोपासका—
स्तान् दर्शयति। ज्ञानयज्ञेनेति अन्ये न महात्मनः पूर्व्वोक्त-
साधनानुष्ठानासमर्था इत्यर्थः, ज्ञानयज्ञेन "तं वा अहमस्मि
भगवो देवता अहं वै त्वमसि" इत्यादि-श्रुत्युक्तमहंग्रहोपासनं
ज्ञानं स एव परमेश्वरयजनरूपत्वात् यज्ञस्तेन, चकार एवार्थे,
अपि-शब्दः साधनान्तरत्यागार्थः, एकत्वेन उपास्योपासकयोरभेद-
चिन्तनरूपेण। ततोऽपि न्यूना अन्ये पृथक्त्वेन भेदचिन्तनरूपेण
"आदित्यो ब्रह्मेत्यादेशः" इत्यादि श्रुत्युक्तेन प्रतीकोपासनेन
ज्ञानयज्ञेन। "अन्ये ततोऽपि मन्दा बहुधा बहुभिः प्रकारैर्विश्व-
तोमुखं विश्वरूपं सर्व्वात्मानं मामेवोपासते" इति मधुसूदन-
सरस्वतीपादानां व्याख्या। अत्र 'नादेवो देवमर्च्चयेत्' इति
तान्त्रिकदृष्ट्या गोपालोऽहम् इति भावनावत्त्वे या गोपालो-
पासना, सा अहंग्रहोपासना। तथा यः परमेश्वरो विष्णुः स



हि सूर्य्य एव नान्यः; स हि इन्द्र एव नान्यः, स हि सोम
एव नान्यः' इत्येवं भेदेन एकस्या एव भगवद्विभूतेर्या उपासना
सा 'प्रतीकोपासना'। विष्णुः सर्व्वः इति समस्त-विभूत्यु-
पासना विश्वरूपोपासनेति ज्ञानयज्ञस्य त्रैविध्यम्, यद्वा, एकत्वेन
पृथक्त्वेन इत्येक एव 'अहंग्रहोपासना'—'गोपालोऽहं' 'गोपालस्य
दासोऽहम्' इत्युभयभावनामयी समुद्रगामिनी नदीव समुद्राभिन्ना-
ऽभिन्ना चेति। तदा च ज्ञानयज्ञस्य द्वैविध्यम् ॥ १५ ॥

गी०भू०—एवं केवलस्वरूपनिष्ठान् कीर्त्तनादिशुद्धभक्तिप्रधा-
नान्महात्मशब्दितानभिधाय गुणीभूत-तत्कीर्त्तनादिज्ञानप्रधानान्
भक्तानाह–ज्ञानेति। पूर्व्वतोऽन्ये केचन भक्ताः पूर्व्वोक्तेन कीर्त्त-
नादिज्ञानयज्ञेन च यजन्तो मामुपासते। तत्र प्रकारमाह—बहुधा
बहुप्रकारेण पृथक्त्वेन प्रपञ्चाकारेण प्रधानमहदाद्यात्मना विश्वतो-
मुखमिन्द्रादिदैवतात्मना चावस्थितं मामेकत्वेनोपासते। अयमत्र
निष्कर्षः–सूक्ष्मचिदचिच्छक्तिमान् सत्यसङ्कल्पः कृष्णो "बहु-
स्याम्" इति स्वीयेन सङ्कल्पेन स्थूलचिदचिच्छक्तिमानेक एव
ब्रह्मादिस्तम्वान्तविचित्रजगद्रूपतयावतिष्ठत इत्यनुसन्धिना तादृ-
शस्य मम कीर्त्तनादिना च मामुपासत इति ॥१५॥

अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम्।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥१६॥
पिताहमस्य जगतो माता धाता पितामहः।
वेद्यं पवित्रमोंकार ऋक्साम यजुरेव च ॥१७॥
गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत्।
प्रभवः प्रलयः स्थानं निधानं वीजमव्ययम् ॥१८॥

तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥१९॥

साරा०ब०—बहुधोपासते कथं त्वामेव इत्याशङ्क्य आत्मनो विश्वरूपत्वं प्रपञ्चयति चतुर्भिः । क्रतुः श्रौतोऽग्निष्टोमादिः, यज्ञः स्मार्त्तो वैश्वदेवादिः,औषधम् औषधि-प्रभवमन्नम् , पिता व्यष्टि-समष्टिसर्व्वजगदुत्पादनात् , माता जगतोऽस्य स्वकुक्षि—मध्य एव धारणात्, धाता जगतोऽस्य पोषणात् , पितामहः जगत्स्रष्टुः ब्रह्मणोऽपि जनकत्वात् , वेद्यं ज्ञेयं बस्तु, पवित्रं शोधकं बस्तु, गतिः फलं, भर्त्ता पतिः, प्रभुर्नियन्ता, साक्षी शुभाशुभद्रष्टा, निबासः आस्पदं , शरणं बिपद्भ्यस्त्राता, सुहृत् निरुपाधिहितकारी , प्रभबाद्याः सृष्टिसंहार-स्थितयः क्रियाश्चाहं, निधानं निधिः पद्मशङ्खादिः, बीजं कारणम , अव्ययम् अबिनाशि, न तु ब्रीह्यादिबन्नश्वरम , आदित्यो भूत्वा निदाघे तपामि, प्रावृषि बर्षम् उत्सृजामि, कदाचिच्चैव ग्रहरूपेण बर्षं निगृह्णामि च। अमृतं मोक्षः, मृत्युः संसारः, सदसत् स्थूलसूक्ष्मः, --एतत् सर्व्वम् अहमेव इति मत्वा विश्वतोमुखं मामुपासते इति पूर्व्वेणान्वयः ॥ १६-१९ ॥

गी०भू०—अहमेव जगद्रूपतयावस्थित इत्येतत् प्रदर्शयति–अहमिति चतुर्भिः । क्रतुर्ज्योतिष्टोमादिः श्रौतो, यज्ञो वैश्वदेवादिः स्मार्त्तः, स्वधा पित्रर्थे श्राद्धादिः, औषधं भेषजमौषधिप्रभव-मन्नं बा, मन्त्रो "याज्यापुरो नु' बाक्यादिर्य्येनोद्दिश्य हविर्दे-वेभ्यो दीयते, आज्यं घृतहोमादिसाधनम् , अग्निर्होमादिकारण-माहबनीयादिः, हुतं होमो हविःप्रक्षेपः, एतत् सर्व्वात्मनाहमेवा-स्थितः। पिताहमिति–अस्य स्थिरचरस्य जगतस्तत्र तत्र पितृत्वेन मातृत्वेन पितामहत्वेन चाहमेव स्थितः,धाता धारकत्वेन पोषकत्वेन



च तत्र तत्र स्थितो राजादिश्चाहमेव–चिदचिच्छक्तिमतस्तदन्तर्य्यामिणो मत्तोपामनतिरेकात् , वेद्यं ज्ञेयं बस्तु, पबित्रं शुद्धिकरं गङ्गादिबारि. ज्ञेये ब्रह्मणि ज्ञानहेतुरोङ्कारः सर्व्ववेदबीजभूतः, ऋगादिस्त्रिविधो वेदश्चशब्दादथर्व्व च ग्राह्यम्–तेषु नियताक्षरः पादा ऋक् , सैव गीतिबिशिष्टा साम, सामपदं तु गीतिमात्र-स्यैव वाचकमित्यन्यत् , गीतिशून्यमनियताक्षरं यजुः, एतत्त्रिविधं कर्म्मोपयोगिमन्त्रजातमहमेवेत्यर्थः । गतिः साध्यसाधनभूता 'गम्यते इयमनया च' इति निरुक्तेः, भर्त्ता पतिः, प्रभुर्नियन्ता, साक्षी शुभाशुभद्रष्टा, निबासः भोगस्थानं–'निबसत्यत्र'इति निरुक्तेः, शरणं प्रपन्नार्त्तिहृत-'शीर्य्यते दुःखमस्मिन'इति निरुक्तेः, सुहृन्निमित्ताहितकृत , प्रभबादयः स्वर्गप्रलयस्थितयः क्रिया, निधानं निधिर्महापद्मादिर्नबबिधः, बीजं कारणमव्ययमबिनाशि, न तु ब्रीह्यादिवद्बिनाशि । तपामीति – सूर्य्यरूपेणाहमेव निदाघे जग-त्तपामि, प्रावृषि बर्षं जलं बिसृजामि मेघरूपेन, कदाचिदवग्रह-रूपेण वर्षं निगृह्णामि आकर्षामि, अमृतं मोक्षः, मृत्युः संसारः, सत् स्थूलम् , असत् सूक्ष्मम् , एतत् सर्व्वमहमेब तथा चैवं बहु-बिधनामरूपाबस्थ निखिलजगद्रूपतया स्थित एक एव शक्तिमान् बासुदेव इत्येकत्वानुसन्धिना ज्ञानयज्ञेन चैके यजन्तो मामु-पासते ॥१६–१९॥

त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान्दिवि देवभोगान्॥२०

सारा०ब०—एवं त्रिविधोपासनाबन्तोऽपि भक्ता एव मामेव परमेश्वरं जानन्तो मुच्यन्ते। ये तु कर्म्मिणस्ते न मुच्यन्त एव इत्याह द्वाभ्यां—त्रैविद्या इति। ऋग्यजुःसामलक्षणास्तिस्रो

विद्या अधीयन्ते जानन्ति वा त्रैविद्या वेदत्रयोक्तकर्म्मपरा इत्यर्थः। यज्ञैर्मामिष्ट्वा इन्द्रादयो ममैव रूपाणीत्यजानन्तोऽपि वस्तुत इन्द्रादिरूपेण मामेव इष्ट्वा यज्ञशेषं सोमं पिबन्तीति सोमपास्ते पुण्यं प्राप्य ॥ २० ॥

गी०भू०—एवं स्वभक्तानां वृत्तिमभिधाय तेषामेव विशेषं बोधयितुं स्वविमुखानां वृत्तिमाह-त्रैविद्येति द्वाभ्याम। तिसृणां विद्यानां समाहारस्त्रिविद्यं, तद्येऽधीयते विदन्ति च ते त्रैविद्याः-"तदधीते तद्वेद" इति सूत्रादण्-ऋग्यजुःसामोक्तकर्म्मपरा इत्यर्थः । त्रयीविहितैर्ज्योतिष्टोमादिभिर्यज्ञैर्मामिष्ट्वा-इन्द्रादयो ममैव रूपाण्यविद्वन्तोऽपि वस्तुतस्तत्तद्रूपेणावस्थित मामेवाराध्येत्यर्थः। सोमपा यज्ञशेषं सोमं पिबन्तः, पूतपापा विनष्टस्वर्गादिप्राप्तिविरोधिकल्मषाः सन्तो ये स्वर्गतिं प्रार्थयन्ते ते पुण्यमित्यादि विस्फुटार्थः। मयैव दत्तामिति शेषः ॥२०॥

**ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।**
**एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते ॥२१॥**

सारा०ब०—गतागतं पुनः पुनर्मृत्युजन्मनी ॥ २१ ॥

गी०भू०—ततश्च, ते तर्मात ते स्वर्गप्रार्थकाः प्रार्थितं तं स्वर्गलोकं भुक्त्वा तत्प्रापके पुण्ये क्षीणे सति मर्त्यलोकं विशन्ति पञ्चाग्निविद्योक्तरीत्या भुवि ब्राह्मणादिजन्मानि लभन्ते पुनरप्येवमेव त्रयीविहितं धर्म्ममनुतिष्ठन्तः कामकामाः स्वर्गभोगेच्छवो गतागतं लभन्ते संसरन्तीत्यर्थः ॥२१॥

**अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥२२॥**

शारा०बऽ--मदनन्यभक्तानां सुखन्तु न कर्म्मप्राप्यं किन्तु



मद्दत्तमेव इत्याह—अनन्या इति। नित्यमेव सदैवाभियुक्तानां पण्डितानामिति तदन्ये नित्यमपण्डिता इति भावः; यद्वा नित्यसंयोगस्पृहावतां योगध्यानादिलाभः क्षेमं तत्पालनञ्च तैरनपेक्षितमप्यहमेव वहामि, अत्र करोमीत्यप्रयुज्य वहामीतिप्रयोगात् तेषां शरीरपोषणभारो मयैवोह्यते, यथा स्व-कलत्र-पुत्रादिपोषणभारो गृहस्थेनेति भावः। न चान्येषामिव तेषामपि योगक्षेमं कर्म्म प्राप्यमेवेत्यत आत्मारामस्य सर्व्वत्रोदासीनस्य परमेश्वरस्य तव किं तद्वहनेनेति वाच्यम्—"भक्तिरस्य भजनं तदिहामुत्रोपाधिनैरास्येनामुष्मिन् मनःकल्पनमेतदेव नैष्कर्म्यम्" इति श्रुतेर्मदनन्यभक्तानां निष्कामत्वेन नैष्कर्म्यात् तेषु दृष्टं सुखं मद्दत्तमेव तत्र मम सर्व्वत्रोदासीनस्यापि स्वभक्तवात्सल्यमेव हेतुर्ज्ञेयः। न चैवं त्वयि स्वेष्टदेवे स्वनिर्व्वाहभारं ददानास्ते भक्ताः प्रेमशून्या इति वाच्यम्; तैर्मयि स्वभारस्य सर्व्वथैवानर्पणात् मयैव स्वेच्छया ग्रहणात्। न च सङ्कल्पमात्रेण विश्वसृष्ट्यादिकर्त्तुं ममायं भारो ज्ञेयः,यद्वा भक्तजनासक्तस्य मम स्वभोग्यकान्ताभारवहनमिव तदीय-योगक्षेमवहनमतिसुखप्रदमिति ॥ २२ ॥

गी०भू०—अथ स्वभक्तानां विशेषं निरूपयति—अनन्या इति। ये जना अनन्या मदेकप्रयोजना मां चिन्तयन्तो ध्यायन्तः परितः कल्याणगुणरत्नाश्रयतया विचित्राद्भुतलीलापीयूषाश्रयतया दिव्यविभूत्याश्रयतया चोपासते भजन्ति तेषां नित्यं सर्व्वदैव मय्यभियुक्तानां विस्मृतदेहयात्राणामहमेव योगक्षेममन्नाद्याहरणं तत्संरक्षणञ्च वहामि। अत्र करोमीत्यनुक्त्वा वहामीत्युक्तिस्तु तत्पोषणभारो मयैव वोढव्यो गृहस्थस्येव कुटुम्बपोषणभार इति व्यनक्ति। एवमाह सूत्रकारः--"स्वामिनः फलश्रुतेरित्यात्रेयः" इति। अत्राहु—तेषां नित्यं मया सार्द्धमभियोगं

बाञ्छतां योगं मत्प्राप्तिलक्षणं क्षेमञ्च मत्तोऽपुनरावृत्तिलक्षण-महमेव बहामि, तेषां मत्प्रापणभारो ममैव, न त्वर्चिरादेर्देवगण-स्येति। एवमेवाभिधास्यति द्वादशे-'ये तु सर्व्वाणि कर्म्माणि' इत्यादिद्वयेन। सूत्रकारोऽप्येवमाह-"बशेषञ्च दर्शयति" इति ॥२२॥

येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥२३॥

सारा०ब०—ननु च ज्ञानयज्ञेन चाप्यन्ये इत्यनेन त्वया स्वस्यैवोपासना त्रिविधोक्ता, तत्र बहुधा विश्वतोमुखमिति तृतीयाया उपासनाया ज्ञापनार्थम् "अहं क्रतुरहं यज्ञः" इत्यादिना स्वस्य विश्वरूपत्वं दर्शितम्, अतः कर्म्मयोगेन कर्म्माङ्गभूते-न्द्रादियाजकास्तथा प्राधान्येनैव देवतान्तरभक्ता अपि त्वद्भक्ता एव। कथं तर्हि ते न मुच्यन्ते ? यदुक्तं—त्वया "गतागतं कामकामा लभन्ते" इति, "अन्तवत्तु फलं तेषाम्" इति च तत्राह—येऽपीति। सत्यं मामेव यजन्तीति किन्त्वविधि-पूर्व्वकं—मत्प्रापकं विधिं बिनैव यजन्त्य पुनराबर्त्तन्ते ॥ २३ ॥

गी०भू०—नन्विन्द्रादियाजिनोऽपि बस्तुतस्त्वद्याजिन एव तेषां कुतो गतागतमिति चेत्तत्राह-येऽपीति। ये जना अन्यदेव-ताभक्ताः केबलेष्विन्द्रादिषु भक्तिमन्तः श्रद्धया अत एव फलप्रदा इति दृढबिश्वासेनोपेताः सन्तो यजन्ते यज्ञैस्तानर्च्चयन्ति, तेऽपि मामेव यजन्ति इति सत्यमेतत्, किन्त्वविधिपूर्व्वकं ते यजन्ति—येन बिधिना गतागतनिबर्त्तका मत्प्राप्तिः स्यात् तं बिधिं बिनैव। अतस्तत्ते लभन्ते ॥२३॥

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥२४॥



सारा०ब०—अबिधिपूर्व्वकत्वमेबाह-अहमिति। देबतान्तर-रूपेणाहमेव भोक्ता प्रभुः स्वामी फलदाता चाहमेवेति। मान्तु तत्त्वेन न जानन्ति —यथा सूर्य्यस्याहमुपासकः सूर्य्य एव मयि प्रसीदतु, सूर्य्य एव मदभीष्टं फलं ददातु--सूर्य्य एव परमेश्वर इति तेषां बुद्धिर्न तु परमेश्वरो नारायण एव सूर्य्यः स एव तादृशश्रद्धोत्पादकः, स एव मह्यं सूर्य्योपासनाफलप्रद इति बुद्धिरतस्तत्त्वतो मदभिज्ञानाभावात्ते च्यवन्ते भगवान्नारायण एव सूर्य्यादिरूपेणाराध्यत इति भावनया बिश्वतोमुखं मामुपासी-नास्तु मुच्यन्त एव। तस्मान्मद्विभूतिषु पूजा सूर्य्यादिषु मद्विभू-तिज्ञानपूर्व्विकैव कर्त्तव्या' न त्वन्यथेति द्योतितम् ॥ २४ ॥

गी०भू०—अबिधिपूर्व्वकतां दर्शयति-अहं हीति। अहमेवे-न्द्रादिरूपेण सर्व्वेषां यज्ञानां भोक्ता प्रभुः स्वामी पालकः फल-दश्चेत्येवं तत्त्वेन मां नाभिजानन्ति, अतस्ते च्यवन्ति संसरन्ति ॥२४

यान्ति देवव्रता देवान्पितॄन्यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ।२५

सारा०ब०--ननु च तत्तद्देवतापूजापद्धतौ यो यो विधि-रुक्तस्तेनैव बिधिना सा सा देबता पूज्यत एव। यथा विष्णु-पूजापद्धतौ य एव बिधिस्तेनैव वैष्णवा विष्णुं पूजयन्त्यतो देवतान्तरभक्तानां को दोषः इति चेत्? सत्यं, तां तां देवतां तद्भक्ताः प्राप्नुबन्त्येव इत्ययं न्याय एव इत्याह-यान्तीति। तेन त-त्तद्देबतानामपि नश्वरत्वात् तत्तद्देबताभक्ताः कथमनश्वरा भवन्तु। अहन्त्वनश्वरो नित्यो मद्भक्ता अप्यनश्वराः इति ते नित्या एवेति द्योतितम्--भवानेकः शिष्यते शेषसंज्ञः इति, "एको नारायण एवासीन्न ब्रह्मा न च शङ्कर" इति, परार्द्धान्ते सोऽ-वुध्यत गोपरूपो मे पुरस्तादाविर्बभूब इति, न च्यवन्ते च

मद्भक्ता महत्यां प्रलयादपि इत्यादि-श्रुतिभ्यः ॥ २५ ॥

गी०भू०—बस्तुतो मम तत्तद्देबतादिरूपतया स्थितत्वेऽपि तद्रूपतया मज्ज्ञानाभावादेव ते मां नाप्नुवन्तीत्याह—यान्तीति। अत्राद्यपर्य्याये व्रत-शब्दः पूजाभिधायी परत्रेज्या-शब्दात्। देबव्रता देबपूजकाः सात्त्विकदर्शपौर्णमास्यादिकर्म्मभिरिन्द्रादीन् यजन्तस्तानेब यान्ति, पितृव्रता राजसाः श्राद्धादिकर्म्मभिः पितॄन् यजन्तस्तानेब यान्ति, भूतेज्यास्तामसास्तत्तद्बलिभिर्यक्षरक्षोविनायकान् पूजयन्तस्तान्येव भूतानि यान्ति। मद्याजिनस्तु निर्गुणाः सुलभैर्द्रव्यैर्मामर्च्चयन्तो मामेव यान्ति। अपिरबधारणे। अयमर्थः—इन्द्रादीनां बयमुपासकास्त एबास्माकमीश्वराः पूजाभिः प्रसीदन्तः फलान्यभीष्टानि दद्युरिति मदन्यदेबसेबकानां भाबना, सर्व्वशक्तिः सर्व्वेश्वरो बासुदेबस्तद्देबतादिरूपेणाबस्थितोऽस्मत्स्वामी सुलभोपचारैः कर्म्मभिराराधितः सर्व्वाण्यस्मदभीष्टानि दद्यादिति मत्सेबकानां भाबना। ततश्च समानान्येव कर्म्माण्यनुतिष्ठन्तोऽपि देबादिसेबिनो मद्भाबना-वैमुख्यात्तान्निजेष्टानेबाचिरायुषोऽल्पबिभूतिनासाद्य तैः सह परिमितान् भोगान् भुक्त्वा तद्विनाशे बिनश्यन्ति। मत्सेबिनस्तु मामनादिनिधनं सत्यसङ्कल्पमनन्तबिभूतिं बिज्ञानानन्दमयं भक्तबत्सलं सर्व्वेश्वरं प्राप्य मत्ताः पुनर्न निबर्त्तन्ते—मया साकमनन्तानि सुखानि अनुभबन्ते मद्धाम्नि दिव्ये बिलसन्तीति ॥२५॥

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥२६॥

सारा०ब०—बरं देवतान्तरभक्तप्रायासाधिक्यं, न तु मद्भक्ताबित्याह—पत्रमिति। अत्र भक्त्येति करणं,—तृतीयायां भक्त्युपहृतमिति पौनरुक्त्यं स्यात्, अतः सहार्थे तृतीया, भक्त्या



सहिता मद्भक्ता इत्यर्थः। तेन मद्भक्तभिन्नो जनस्तात्कालिक्या भक्त्या यत् प्रयच्छति, तत् तेनोपहृतमपि पत्रपुष्पादिकं नैवाश्नामीति द्योतितम्। ततश्च मद्भक्त एब पत्रादिकं यद्ददाति तत् तस्याहमश्नामि यथोचितमुपयुञ्जे। कीदृशम्? भक्त्या उपहृतं न तु कस्यचिदनुरोधादिना दत्तमित्यर्थः। किञ्च मद्भक्तस्याप्यपबित्रशरीरत्वे सति नाश्नामीत्याह—प्रयतात्मनः शुद्धशरीरस्येति रजस्वलादयो, व्यावृत्ताः, यद्वा प्रयतात्मनः शुद्धान्तःकरणस्य, मद्भक्तं विना नान्यः शुद्धान्तःकरण इति। "धौतात्मापुरुषः कृष्णपादमूलं न मुञ्चति" इति परीक्षिदुक्तेर्मत्पादसेबात्यागासामर्थ्यमेव शुद्धचित्तत्वचिह्नम्, अतः कचित् कामक्रोधादिसत्त्वेऽपि उत्खातदंष्ट्रोरगदंशबत्तस्याकिञ्चित्करत्वं ज्ञेयम्॥२६

गी०भू०—एबमन्यथानन्तफलत्वान्मद्भक्तिः कार्य्येत्युक्त्वा सुखसाध्यत्वाच्च सा कार्य्येत्याह—पत्रमिति। पत्रं बा पुष्पं बान्यद्वा, यत्सुलभं बस्तु यो भक्त्या प्रीतिभरेण मे सर्व्वेश्वराय प्रयच्छति, तस्य भक्त्युपहृतं प्रीत्यर्पितं तत्तादनन्तबिभूतिः पूर्णकामोऽप्यहमश्नामि यथोचितमुपभुञ्जे, तत्प्रीत्युदितवुत्तृष्णः सन् तद्भक्त्यावेशात्त सर्व्वमद्मीति वा। तस्य कीदृशस्येत्याह—प्रयतात्मनो बिशुद्धमनसो निष्कामस्येत्यर्थः। तथा च निष्कामेण मदनुरक्तेनार्पितं तदश्नामि, तद्विपरीतेनार्पितं तु नाश्नामीत्युक्तम्, 'भक्त्या' इत्युक्त्वापि पुनर्भक्त्युपहृतमित्युक्तिर्भक्तिरेब मत्तोषिका, न तु द्विजत्व-तपस्वित्वादिति सूचयति। इह 'सततम्', 'अनन्यः' 'पत्रम्' इत्यादिभिस्त्रिभिरुक्ता कीर्त्तनादिरूप-बिशुद्धभक्तिरर्पितैव क्रियेत, न तु कृत्वार्पितेति। "इति पुंसार्पिता बिष्णौ भक्तिश्चेन्नबलक्षणा। क्रियेत भगबत्यद्धा तन्मन्येऽधीतमुत्तमम्" इति प्रह्लादबाक्यात्; अतस्तथात्र नोक्तेः॥२६॥

**यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।**
**यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥२७॥**

साराऽब०—ननु च "आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी" इत्यारभ्य एतावतीषु त्वदुक्तासु भक्तिषु मध्ये खल्वहं कां भक्तिं करवै इत्यपेक्षायां, भो अर्ज्जुन ! साम्प्रतं तावत्तव कर्म्मज्ञानादीनां त्यक्तुमशक्यत्वात् सर्ब्बोत्कृष्टायां केबलायामनन्यभक्तौ नाधिकारो नापि निकृष्टायां सकामभक्तौ, तस्मात्त्वं निष्कामां कर्म्मज्ञानमिश्रां प्रधानीभूतामेब भक्तिं कुर्ब्बित्याह-यत् करोषीति द्वाभ्याम् । लौकिकं वैदिकं बा यत् कर्म्म त्वं करोषि, यदश्नासि व्यबहारतो भोजनपानादिकं यत् करोषि, यत्तापस्यसि तपः करोषि, तत् सर्ब्बं मय्येबार्पणं यस्य तद् यथा स्यात् , तथा कुरु । न चायं निष्कामकर्म्मयोग एब न तु भक्तियोग इति बाच्यम् । निष्काम कर्म्मिभिः शास्त्रविहितं कर्म्मैव भगबत्यर्प्यते, न तु व्यवहारिकं किमपि कृतम् , तथैब सर्व्वत्र दृष्टेः । भक्तैस्तु स्वात्ममनः प्राणेन्द्रियव्यापारमात्रमेव स्वेष्टदेवे भगबत्यर्प्यते । यदुक्तं भक्तिप्रकरण एब—"कायेन बाचा मनसेन्द्रियैर्व्वा बुद्ध्यात्मना बानुसृतस्वभावात् । करोति यद् यत् सकलं परस्मै नारायणायेति समर्पयेत्तत् ॥" इति । ननु च जुहोषीति हबनमिदमर्च्चनभक्त्यङ्गभूतं बिष्णूद्देश्यकमेब, तपस्यतीति तपोऽप्येतदेकादश्यादिव्रतरूपमेव अत इयमनन्यैव भक्तिः किमिति नोच्यते ? सत्यम् अनन्या भक्तिर्हि कृत्वापि न भगबत्यर्प्यते किन्तु भगवत्यर्पितैव क्रियते, यदुक्तं श्रीप्रल्हदेन-"श्रबणं कीर्त्तनं बिष्णोः स्मरणम्" इत्यत्र "इति पुंसार्पिता बिष्णौ भक्तिश्चेन्नबलक्षणा क्रियेत" इत्यस्य व्याख्या च श्रीस्वामिचरणानां-"भगबति बिष्णौ भक्तिः क्रियते, सा चार्पितैव सती यदि क्रियते न तु कृता सती पश्चादर्प्येत इत्यतः पद्यमिदं न केवलायां पर्य्यबसेदिति ॥२७॥



गी०भू०—सततम् इत्यादिभिर्निरपेक्षाणां भक्तिर्मया त्वां प्रत्युक्ता, त्वया तु परिनिष्ठितेन कीर्त्तनादिकां भक्तिं कुर्व्वतापि लोकसंग्रहाय निखिलकर्म्मार्पणान्ममापि भक्तिः कार्य्येति भावेनाह-यदिति । यत्त्वं देहयात्रा-साधकं लौकिकं कर्म्म करोषि, यच्च देहधारणार्थं अन्नादिकमश्नासि, तथा यज्जुहोषि वैदिकमग्निहोत्रादिहोममनुतिष्ठसि, यच्च सत्पात्रेभ्यः अन्नहिरण्यादिकं ददासि, प्रत्यब्दमज्ञातदुरितक्षतये चान्द्रायणाद्याचरसि, तत् सर्व्वं मदर्पणं यथा स्यात्तथा कुरुष्व-तेन मन्निर्म्मितस्यास्य लोकस्य संग्रहात्त्वयि मत्प्रसादो भूयान् भावीति । न चेयं सर्व्वकर्म्मार्पणरूपा भक्तिः सानिष्ठानामिति बाच्यम्-तैर्वैदिकानामेव तत्रार्प्यमाणात् ; किन्तु परिनिष्ठितानामेवेयम्—तैः यत् करोषि इत्यादि स्वामिनिर्द्देशेन सर्व्वकर्म्मणां तत्रार्पणात् । ते हि स्वामिनो लोकसंग्रहं प्रयासमर्पानिनीषवस्तथा तान्याचरन्तस्तं प्रसादयन्तीति ॥२७॥

**शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।**
**संन्यासयोगयुक्तात्मा बिमुक्तो मामुपैष्यसि ॥२८॥**

साराऽब०—शुभाशुभफलैरनन्तैः कर्म्मरूपैर्बन्धनैर्विमोक्ष्यसे । "भक्तिरस्य भजनं तदिहामुत्रोपाधिनैरास्येनामुष्मिन्मनःकल्पनमेतदेव नैष्कर्म्म्यम्" इति श्रुतेः । सन्न्यासः कर्म्मफलत्यागः स एब योगः तेन युक्त आत्मा मनो यस्य सः । न केवलं युक्त एब भविष्यसि, अपि तु बिमुक्तो मुक्तेष्वपि बिशिष्टः सन् मामुपैष्यसि साक्षात् परिचरितुं मन्निकटमेष्यसि,—"मुक्तानामपि सिद्धानां नारायणपरायणः । सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने ॥" इति स्मृतेः । "मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम्" इतिशुकोक्तेः, मुक्तेः सकाशादपि साक्षान्मत्प्रेमसेवया उत्कर्षोऽयमेवेति भावः ॥ २८ ॥

गी०भू०—ईदृशभक्तेः फलमाह-शुभेति । एवं मन्निदेशकृतायां सर्व्वकर्म्मार्पणलक्षणायां भक्तौ सत्यां कर्म्मरूपैर्बन्धनैस्त्वं मोक्ष्यसे । कीदृशैरित्याह-शुभेतीष्टानिष्टफलैस्तत्प्राप्तिप्रतीपैः प्राचीनैरित्यर्थः । कीदृशस्त्वमित्याह, संन्यासेति मयि कर्म्मार्पणं संन्यासः, स एव चित्तविशोधकत्वाद्योगस्तद्युक्त आत्मा मनो यस्य सः । न केवलं मुक्त एव कर्म्मभिर्भविष्यस्यपि तु विमुक्तः सन् मामुपैष्यसि-मुक्तेषु विशिष्टः सन् मां साक्षात् सेवितु मदन्तिकं प्राप्स्यसि ॥२८॥

**समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।**
**ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥२९॥**

सारा०व०—ननु भक्तानेव विमुक्तीकृत्य स्वं प्रापयसि, न त्वभक्तानिति चेत्तर्हि तवापि किं रागद्वेषादिकृतं वैषम्यमस्ति ? नेत्याह-समोऽहमिति । ते भक्ता मयि वर्त्तन्ते, अहमपि तेषु वर्त्ते इति व्याख्याने भगवत्येव सर्व्वं जगद्वर्त्तत एव, भगवानपि सर्व्वजगत्सु वर्त्तत एव इति नास्ति विशेषः, तस्मात् "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इति न्यायेन, मयि ते आसक्ता भक्ता वर्त्तन्ते यथा तथाहमपि तेष्वासक्त इति व्याख्येयम । अत्र कल्पवृक्षादिदृष्टान्तस्त्वेकांशेनैव ज्ञेयः, न हि कल्पवृक्षफलाकाङ्क्षया तदाश्रिता आसज्जन्ति नापि कल्पवृक्षः स्वाश्रितेष्वासक्तः नापि स आश्रितस्य वैरिणो द्वेष्टि, भगवांस्तु स्वभक्तवैरिणं स्वहस्तेनैव हिनस्ति; यदुक्तं प्रह्लादाय-"यदा द्रुह्येद्धनिष्येऽपि वरोर्ज्जितम्" इति । केचित्तु तु-कारस्य भिन्नोपक्रमार्थत्वमाख्याय भक्तवात्सल्यलक्षणन्तु वैषम्यं मयि विद्यत एवेति, तच्च भगवतो भूषणं न तु दूषणमिति व्याचक्षते । तथा हि भगवतो भक्तवात्सल्यमेव प्रसिद्धं न तु ज्ञानि-



वात्सल्यं योगिवात्सल्यं वा—यथा ह्यन्यो जनः स्व-दासेष्वेव वत्सलो, नान्यदासेषु तथैव भगवानपि स्वभक्तेष्वेव वत्सलो न रुद्रभक्तेषु, नापि देवीभक्तेष्विति ॥ २९ ॥

गी०भू०—ननु भक्तानेव विमोच्यान्तिकं नयसि, नाभक्तानिति तवापि किं सर्व्वेश्वरस्य रागद्वेषकृतं वैषम्यमस्ति ? तत्राह-समोऽहमिति । देवमनुष्यतिर्य्यक्स्थावरादिषु जात्याकृतिस्वभावैर्विषमेषु सर्व्वेषु भूतेषु तत्तत्कर्म्मानुगुण्येन सृष्टिपालनकृत सर्व्वेश्वरोऽहं समः पर्जन्य इव नानाविधेषु तत्तद्बीजेषु, न तेषु-मे कोऽपि द्वेष्यः प्रियो वेत्यर्थः । भक्तानामभक्तेभ्यो विशेषं बोधयितुमिह तु-शब्दः । ये तु मां भजन्ति श्रवणादिभक्तिभिरनुकूलयन्ति, ते भक्त्यानुरक्त्या मयि वर्त्तन्ते, तेष्वहं च सर्व्वेश्वरोऽपि भक्त्या वर्त्ते-'मणिसुवर्ण'-न्यायेन भगवतोऽपि भक्तेषु भक्तिरस्ति-"भगवान् भक्तभक्तिमान्" इत्यादि-श्रीशुकवाक्यादिति प्रेम्णा मिथो वर्त्तनविशेषो दर्शितः । अन्यथा त्वविशेषापत्तिः । तस्य प्रतिज्ञा त्वीदृश्येवावगम्यते-"ये यथा माम्" इत्यादिना । कल्पद्रुमदृष्टान्तोऽप्यत्रांशिक एव-तत्र मिथः प्रीत्यप्रतीतेः पक्षपाताप्रतीतेश्च ; तथाच सर्व्वत्राविषमेऽपि मयि स्वाश्रितवात्सल्यलक्षणं वैषम्यमस्तीत्युक्तम् । एवमाह सूत्रकारः-"उपपद्यते चाभ्युपलभ्यते च" इति । ननु भक्तेरपि कर्म्मत्वानुसारेण तेषु तद्वात्सल्यान्न तल्लक्षणे तदिति चेन्मैवमेतत्-स्वरूपशक्तिवृत्तेर्भक्तेः कर्म्मान्यत्वात् । श्रुतिश्च, "सच्चिदानन्दैकरसे भक्तियोगे तिष्ठति" इति । न च स्वरूपप्रयुक्तत्वाद्दूषणमेतदिति वाच्यम्-गुणश्रेष्ठत्वेन स्तूयमानत्वात् ॥२९॥

**अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।**
**साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥३०॥**

सारा०ब०--स्वभक्तेष्वासक्तिर्मम स्वाभाविक्येव भवति सा दुराचारेऽपि भक्ते नापयाति तमप्युत्कृष्टमेव करोमीत्याह–अपि चेदिति। सुदुराचारः परहिंसा-परदार-परद्रव्यादिग्रहण-परायणोऽपि मां भजते चेत्, कीदृग्भजनवानित्यत आह–अनन्य-भाक् मत्तोऽन्यदेवतान्तरं मद्भक्तेरन्यत् कर्म्मज्ञानादिकं, मत्काम-नातोऽन्यां राज्यादिकामनां न भजते स साधुः। नन्वेतादृशे कदाचारे दृष्टे सति कथं साधुत्वम्? तत्राह–मन्तव्यो मननीयः साधुत्वेनैव स ज्ञेय इति यावत्; मन्तव्यमिति बिधिवाक्यं अन्यथा प्रत्यवायः स्यात्; अत्र मदाज्ञैव प्रमाणमिति भावः। ननु त्वां भजत इत्येतदंशेन साधुः परदारादिग्रहणांशेनासाधुश्च स मन्तव्यस्तत्राह–एवेति। सर्व्वेणाप्यंशेन साधुरेव मन्तव्यः कदापि तस्यासाधुत्वं न द्रष्टव्यमिति भावः। सम्यग्व्यवसितं निश्चयो यस्य सः। दुस्त्यजेन स्वपापेन नरकं तिर्यग् योनीर्वा यामि ऐकान्तिकं श्रीकृष्णभजनन्तु नैव जिहासामीति स शोभनमध्यवसायं कृतवा-नित्यर्थः ॥ ३० ॥

गी०भू०—मम शुद्धभक्तिवश्यता-लक्षणः स्वभावो दुस्त्यज एव; यदहं जुगुप्सितकर्म्मण्यपि भक्तेऽनुरज्यंस्तमुत्कर्षयामीति पूर्व्वार्थं पुष्णन्नाह–अपि चेदिति। अनन्यभाक् जनश्चेत् सुदुरा-चारोऽतिविगर्हितकर्म्मापि सन् मां भजते–मत्कीर्त्तनादिभिर्मां सेवते, तदापि स साधुरेव मन्तव्यः; मत्तोऽन्यां देवतां न भज-त्याश्रयतीति मदेकान्ती मामेव स्वामिनं परमपुमर्थञ्च जानन्नि-त्यर्थः। उभयथा वर्त्तमानोऽपि साधुत्वेन स पूज्य इति बोध-यितुमेव-कारः। तस्य तथात्वेन मनने 'मन्तव्य' इति स्वनिर्देश-रूपो विधिश्च दर्शितः–इतरथा प्रत्यवायादिति भावः। उभय-थापि वर्त्तमानस्य साधुत्वमेवेत्यत्रोक्तः हेतुः पुष्णन्नाह–सम्य-गिति-यदसौ सम्यग्व्यवसितो मदेकान्तनिष्ठारूप-श्रेष्ठनिश्चयवा-



नित्यर्थः। एवमुक्तं नारसिंहे–"भगवति च हरावनन्यचेता भृश-मलिनोऽपि विराजते मनुष्यः। न हि शशकलुषच्छविः कदाचि-त्तिमिरपराभवतामुपैति चन्द्र" इति॥३०॥

क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति।
कौन्तेय प्रति जानीहि न मे भक्तः प्रणश्यति ॥३१॥

सारा०ब०—ननु तादृशस्याधर्म्मिणः कथं भजनं त्वं गृह्णासि कामक्रोधादिदूषितान्तःकरणेन निवेदितमन्नपानादिकं कथमश्ना-सीत्यत आह--क्षिप्रं शीघ्रमेव स धर्म्मात्मा भवति। अत्र क्षिप्रं भावी स धर्म्मात्मा शश्वच्छान्तिं गमिष्यति इति अप्रयुज्य भवति गच्छति इति वर्त्तमानप्रयोगात् अधर्म्मकरणानन्तरमेव मामनुस्मृत्य कृतानुतापः क्षिप्रमेव धर्म्मात्मा भवति। हन्त हन्त! मत्तुल्यः कोऽपि भक्तलोकं कलङ्कयन्नधमो नास्ति, तद्धिङ्मा-मिति शश्वत् पुनः पुनरपि शान्तिं निर्व्वेदं नितरां गच्छति, यद्वा, कियतः समयादनन्तरं तस्य भावि धर्म्मात्मत्वं तदानीमपि सूक्ष्मरूपेण वर्त्तत एव। तन्मनसि भक्तेः प्रवेशात् यथा पीते महौ-षधे सति तदानीं कियत्कालपर्य्यन्तं नश्यदवस्थो ज्वरदाहो वा विषदाहो वर्त्तमानोऽपि न गण्यत इति ध्वनिः। ततश्च तस्य भक्तस्य दुराचारत्वगमकाः कामक्रोधाद्या उत्खातदंष्ट्रोरगदंशवदकिञ्चित्करा एव ज्ञेया इत्यनुध्वनिः। अतएव शश्वत् सर्व्वदैव शान्तिं काम-क्रोधाद्युपशमं नितरां गच्छति अतिशयेन प्राप्नोतीति दुरा-चारत्वदशायामपि स शुद्धान्तःकरण एवोच्यत इति भावः। ननु यदि स धर्म्मात्मा स्यात्तदा नास्ति कोऽपि विवादः, किन्तु कश्चिद्दुराचारभक्तो जन्मपर्य्यन्तमपि दुराचारत्वं न जहाति तस्य का वार्त्तेत्यतो भक्तवत्सलो भगवान् सप्रौढ़ि सकोपमिवाह—कौन्तेयेति। मे भक्तो न प्रणश्यति, तदपि

प्राणनाशे अधःपातं न याति। कुतर्ककर्कशवादिनो नैतम्मन्येरन्निति शोकशङ्काव्याकुलमर्ज्जुनं प्रोत्साहयति—हे कौन्तेय, पटहकाहलादि--महाघोषपूर्व्वकं बिवदमानानां सभां गत्वा बाहुमुत्क्षिप्य निःशङ्कं प्रतिजानीहि प्रतिज्ञां कुरु। कथम् ? मे मम परमेश्वरस्य भक्तो दुराचारोऽपि न प्रणश्यत्यपि तु कृतार्थ एव भवति ततश्च ते तत्प्रौढ़िविजृम्भितबिध्वंसितकुतर्काः सन्तो निःसंशयं त्वामेव गुरुत्वेनाश्रयेरन् इति स्वामिचरणाः। ननु कथं भगवान् स्वयमप्रतिज्ञाय प्रतिज्ञातुमर्ज्जुनमेवातिदिदेश,—यथैवाग्रे "मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे" इति वक्ष्यते तथैवात्रापि "कौन्तेय! प्रतिजानेऽहं न मे भक्तः प्रणश्यति" इति कथं नोक्तम् ? उच्यते--भगवता तदानीमेव बिचारितं भक्तबत्सलेन मया स्वभक्तापकर्षलेशमप्यसहिष्णुना स्वप्रतिज्ञां खण्डयित्वापि स्वापकर्षमङ्गीकृत्यापि भक्तप्रतिज्ञैव रक्षिता बहुत्र ; यथा तत्रैव भीष्मयुद्धे स्वप्रतिज्ञामप्यपाकृत्य भीष्मप्रतिज्ञैव रक्षिष्यते। बहिर्म्मुखा वादिनो वैतण्डिका मत्प्रतिज्ञां श्रुत्वा हसिष्यन्ति, अर्ज्जुनप्रतिज्ञा तु पाषाणरेखेवेति ते प्रतियन्ति। अतोऽर्ज्जुनमेव प्रतिज्ञां कारयामीत्यत्रैतादृशदुराचारस्याप्यनन्यभक्तिश्रबणादनन्यभकताभिधायकबाक्येषु सर्व्वत्र न विद्यतेऽन्यत्स्त्रीपुत्राद्यासक्तिबिधर्म्मशोकमोहकामक्रोधादिकं यत्रेति कुपण्डितव्वाख्या न ग्राह्येति ॥ ३१ ॥

गी०भू०—ननु "नाबिरतो दुश्चरितान्नाशान्तो नासमाहितः। नाशान्तमनसो बापि प्रज्ञानेनैनमाप्नुयात्' इति दुराचारिणस्तद्वैमुख्यश्रबणात् कथं तस्य साधुत्वमिति चेत्तत्राह—क्षिप्रमिति। स्वाभाबिकदुराचारिबिषयमिदं श्रबणं, मदेकान्ती तु मन्मासि धृतेनातिपूतेन सर्व्वेश्वरेण मयागन्तुकं दुराचारं बिनिधूय क्षिप्रमेव धर्म्मात्मा सदाचारनिष्ठमना भबति ; शश्वत् पुनःपुनरनुतप्यन्



मत्स्मृतिप्रतिकूलात्तस्माच्छान्तिं निबृत्तिं नितरां गच्छति। नन्वकृतप्रायश्चित्तमेवं स्मार्त्ताः साधुं न मन्येरन्निति चेत्तत्र भक्तानुरक्तिबिबशः सकोपमिबाह—कौन्तेयेति। त्वं तेषां सभां गतः प्रतिजानीहि—मे ममैकान्ती भक्तः प्रमादात् सुदुराचारोऽपि न प्रणश्यति—मत्तो भ्रष्टः सन् दुर्गतिं नाप्नोति—अपि तु तादृशेन मया पूतो मत्प्राप्तियोग्यश्चकास्ति—"स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभाबस्य हरिः परेशः। बिकर्म्म यच्चोत्पतितं कथञ्चिद्धुनोति सर्व्वं हृदि सन्निबिष्टः ॥" इत्यादि स्मृतिभ्यः। स्मार्त्तैस्तु मदेकान्तितोऽन्यत्र बिधायकैर्भाव्यं—स्मार्त्तं प्रायश्चित्तमपेक्ष्य यदुक्तं, मत्स्मृतिरूपं तत्तु प्रबलमिति सुकुलीनैरेब, न तु दुष्कुलीनैराहर्त्तव्यमिति बोधयितुं कौन्तेयेति ॥३१॥

**मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।**
**स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥३२**

सारा०ब०—एबं कर्म्मणा दुराचाराणामागन्तुकान् दोषान् मद्भक्तिर्न गणयतीति किं चित्रम् ? यतो जात्यैव दुराचाराणां स्वभाविकानपि दोषान् मद्भक्तिर्न गणयतीत्याह—मामिति। पापयोनयोऽन्त्यजा म्लेच्छा अपि ; यदुक्तम्—"किरातहूणान्ध्रपुलिन्दपुक्कशा, आभीरकङ्का यबनाः खशादयः। येऽन्ये च पापास्तदुपाश्रयाश्रयाः, शुध्यन्ति तस्मै प्रभविष्णवे नमः ॥" "अहो बत श्वपचोऽतो गरीयान् यज्जिह्वाग्रे बर्त्तते नाम तुभ्यम्। तेपुस्तपस्ते जुहुवुः सस्नुरार्य्या, ब्रह्मानूचुर्नाम गृणन्ति ये ते ॥" किं पुनः स्त्रीवैश्याद्या अशुद्धयलीकादिमन्तः ? ॥ ३२ ॥

गी०भू०—महाघोषपूर्व्वकं बिबदमानानां सभां गत्वा बाहुमुत्क्षिप्य निःशङ्कं प्रतिजानीहि प्रतिज्ञां कुरु—सर्व्वेश्वरोऽहं मदेकान्तिनां आगन्तुकदोषान् बिधुनोमीति किं चित्रम् ? यदति-

पापिनोऽपि मद्भक्तप्रसङ्गाद्विधूताविद्या विमुच्यन्त इत्याह-मां हीति। ये पापयोनयोऽन्त्यजाः सहजदुराचाराः स्युस्तेऽपि मद्भक्तप्रसङ्गेन मां सर्व्वेशं बसुदेवसुतं व्यपाश्रित्य शरणमागत्य परां योगिदुर्लभां गतिं मत्प्राप्तिं यान्ति हि निश्चितमेतत्। एवमाह श्रीमान् शुकः-"किरातहूणान्ध्रपुलिन्दपुक्कशा आभीरकङ्का यबनाः खशादयः। येऽन्ये च पापा यदपाश्रयाश्रयाः शुध्यन्ति तस्मै प्रभविष्णवे नमः॥" इति। स्त्र्यादयो येऽशुद्धव्यलीकादिमन्तस्तेऽपि ॥३२॥

**किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा।**
**अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥३३॥**

साराoबo—ततोऽपि किं पुनर्ब्राह्मणाः पुण्याः सत्कुलाः सदाचाराश्च ये भक्ताः? तस्मात्त्वं मां भजस्व ॥ ३३ ॥

गीoभूo—किमिति। यद्येवं तर्हि ब्राह्मणा राजर्षयः क्षत्रियाश्च सत्कुलाः पुण्याः सदाचारिणो भक्ताः सन्तः परां गतिं यान्तीति किं पुनर्व्वाच्यम्? नास्त्यत्र संशय-लेशोऽपि; तस्मात्त्वमपि राजर्षिरिमं लोकं प्राप्य मां भजस्व अनित्यं नश्वरमसुखमीषत्सुखं बिनाशिन्यल्पसुखेऽस्मिँल्लोके राज्यस्पृहां बिहाय नित्यमनन्तानन्दं मामुपास्य प्राप्नुहीति त्वरात्र व्यज्यते। अत्रास्य लोकस्यानित्यत्वं कण्ठतो ब्रुबन् हरिर्मिथ्यात्वं तस्य निरासात् ॥३३

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।**
**मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥३४॥**

साराoबo—भजनप्रकारं दर्शयन्नुपसंहरति-मन्मना इति। एवमात्मानं मनो देहञ्च युक्त्वा मयि नियोज्य ॥ ३४ ॥



इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्व्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्ज्जुनसंबादे राजगुह्ययोगो नाम नवमोऽध्यायः।

साराoबo-पात्रापात्रबिचारित्वं स्वस्पर्शात् सर्व्वशोधनम्।
भक्तेरेवात्रैतदस्या राजगुह्यत्वमीर्य्यते ॥
इति सारार्थबर्षिण्यां हर्षिण्यां भक्तचेतसाम्।
गीतासु नवमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥

गीoभूo-अथ परिनिष्ठितस्यार्ज्जुनस्याभीष्टां शुद्धां भक्तिमुपदिशन्नुपसंहरति-मन्मना इति। राजभक्तोऽपि राजभृत्यः पत्न्यादिमनास्तथा स तन्मना अपि न तद्भक्तो भवति; त्वं तु तद्बिलक्षणभावेन मन्मना मद्भक्तो भव मयि नीलोत्पलश्यामलत्वादिगुणवति बसुदेवसूनौ स्वस्वामित्व-स्वपुमर्थत्वबुद्ध्यानबच्छिन्नमधुधाराबत् सततं मनो यस्य सः, तथा मद्याजी तादृशस्यातिमात्रप्रियस्य ममार्च्चने निरतो भव; तादृश मामतिप्रेम्णा नमस्कुरु दण्डबत् प्रणम। एवमात्मानं मनो देहञ्च युक्त्वा मयि निवेद्य मत्परायणो मदेकाश्रयः सन् मामुपैष्यसि। एषा भक्तिरर्पितैव क्रियेतेति बोध्यम ॥३४॥

पात्रापात्रधिया शून्या स्पर्शात् सर्व्वाघनाशिनी।
गङ्गेव भक्तिरेवेति राजगुह्यमिह स्मृता ॥

इति श्रीमद्भगवद्गीतोपनिषद्भाष्ये नवमोऽध्यायः।



## दशमोऽध्यायः

श्रीभगवानुवाच-

**भूय एव महाबाहो शृणु मे परमं वचः।**
**यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥१॥**

सारा०ब०—ऐश्वर्य्यं ज्ञापयित्वोचे भक्तिं यत् सप्तमादिषु।
सरहस्यं तदेवोक्तं दशमे सविभूतिकम ॥ (१)

आराध्यत्वज्ञानकारणमैश्वर्य्यं यदेव पूर्व्वत्र सप्तमादिषूक्तम्, तदेव सविशेषं भक्तिमतामानन्दार्थं प्रपञ्चयिष्यन् "परोक्षवादा ऋषयः परोक्षञ्च मम प्रियम्" इति न्यायेन किञ्चिद्दुर्व्बोधतयैवाह—भूय इति, पुनरपि राजविद्या राजगुह्यमिदमुच्यत इत्यर्थः। हे महावाहो इति, यथा बाहुबलं सर्व्वाधिक्येन त्वया प्रकाशितम्, तथैतद्बुद्धिबलमपि सर्व्वाधिक्येन प्रकाशयितव्यमिति भावः। शृणुवति शृण्वन्तमपि तं वक्ष्यमाणेऽर्थे सम्यगवधारणार्थमेव। परमं पूर्व्वोक्तादप्युत्कृष्टम्। ते त्वामतिविस्मितीकर्त्तु—"क्रियार्थोपपदस्य च" इति चतुर्थी, यतः, प्रीयमाणाय प्रेमवते ॥१॥

गी०भू०—सप्तमादौ निजैश्वर्य्यं भक्तिहेतु यदीरितम्।
विभूतिकथनेनात्र दशमे तत् प्रपुष्यते ॥

गी०भू०—पूर्व्वपूर्व्वत्र स्वैश्वर्य्यनिरूपणसंभिन्ना सपरिकरा स्वभक्तिरुपदिष्टा। इदानीं तस्या उत्पत्तये विवृद्धये च स्वासाधारणीः प्राक् संक्षिप्योक्ताः स्वविभूतीर्विस्तरेण वर्णयिष्यन् भगवानुवाच—भूय इति। हे महावाहो! भूय एव पुनरपि मे परमं वचः शृणु—शृण्वन्तं प्रति शृणुवत्युक्तिरुपदेश्येऽर्थे समवधानाय। परमं श्रीमत् मद्दिव्यविभूतिविषयकं यद्वचस्ते तुभ्यमहं हितकाम्यया वक्ष्यामि—"क्रियार्थोपपद"इत्यादि-सूत्राच्चतुर्थी, विज्ञमपि त्वां विस्मितं कर्त्तुमित्यर्थः। हितकाम्यया मद्भक्त्युत्पत्ति-तद्वि‌वृद्धिरूप-त्वत्कल्याणवाञ्छया। ते कीदृशायेत्याह—प्रीयमाणायेति पीयूषपानादिव मद्वाक्यात् प्रीतिं विन्दते ॥१॥

**न मे विदुः सुरगणाः प्रभवं न महर्षयः।**
**अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥२॥**



सारा०ब०—एतच्च केवलं मदनुग्रहातिशयेनैव वेद्यं नान्यथेत्याह—न मे इति। मम प्रभवं प्रकृष्टं सर्व्वविलक्षणं भवं देवक्यां जन्म देवगणा न जानन्ति, ते विषयाविष्टत्वान्न जानन्तु, ऋषयस्तु जानीयुस्तत्राह—न महर्षयोऽपि। तत्र हेतुः—अहमादिः कारणं सर्व्वशः सर्व्वैरेव प्रकारैः, न हि पितुर्जन्मतत्त्वं पुत्रा जानन्तीति भावः। "न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः" इत्यग्रिमानुवादादत्र प्रभव-शब्दस्यान्यार्थता न कल्प्या ॥२॥

गी०भू०—एतच्च मद्भक्तानुकम्पां विना दुर्विज्ञानमिति भाववानाह—न मे इति। सुरगणा ब्रह्मादयः महर्षयश्च सनकादयः मे प्रभवं प्रभुत्वेन भवमनादिदिव्यस्वरूपगुणविभूतिमत्तयावर्त्तनमिति यावत् न विदुर्न जानन्ति। कुत इत्याह—अहमादिरिति। यदहं तेषामादिः पूर्व्वकारणं सर्व्वशः सर्व्वैः प्रकारैरुत्पादकतया बुद्ध्यादि-दातृतया चेत्यर्थः। देवत्वादिकमैश्वर्य्यादिकञ्च मयैव तेभ्यस्तत्तदाराधनतुष्टेन दत्तमतः स्वपूर्व्वसिद्धं मां मदैश्वर्य्यञ्च ते न विदुः; श्रुतिश्चैवमाह—"को वा वेद क इह प्रावोचत् कुत आयाता कुत इयं विसृष्टिरर्वाग्देवा अस्य विसर्जनेनाथ को वेद यत आवभूवेति, नैतद्देवा आप्नुवन्पूर्व्वमर्शत्" इति चैवमाद्या ॥२॥

**यो मामजमनादिं च वेत्ति लोकमहेश्वरम्।**
**असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥३॥**

सारा०ब०—ननु परब्रह्मणः सर्व्वदेशकालापरिच्छिन्नस्य तवैतद्देहस्यैव जन्म देवा ऋषयश्च जानन्त्येव, तत्र स्वतर्जन्या स्ववक्षः स्पृष्ट्वाह—यो मामिति। यो मामजं वेत्ति, किं परमेष्ठिनं न अनादिं सत्यं तर्हि अनादित्वादजमजन्यं परमात्मानं त्वां वेत्त्येव, तत्राह—चेति। अजमजन्यं वसुदेवजन्यञ्च मामनादिमेव यो वेत्ति

इत्यर्थः । मामिति-पदेन वसुदेवजन्यत्वं बुध्यते—"जन्म कर्म्म च मे दिव्यम्"इति मदुक्तेः, मम जन्मवत्त्वं परमात्मत्वात् सदैवाजत्वं च इत्युभयमपि मे परमं सत्यं अचिन्त्यशक्तिसिद्धमेव । यदुक्तं—"अजोऽपि सन्नव्ययात्मा सम्भवामि" इति, तथा चोद्धव-वाक्यं—"कर्म्माण्यनीहस्य भवोऽभवस्य ते" इत्याद्यनन्तरं खिद्यति धीर्विदामिह" इति, अत्र श्रीभागवतामृतकारिका च—"तत्तान्न वास्तवं चेत् स्याद्विदां बुद्धिभ्रमस्तदा । न स्यादेवेत्यतोऽचिन्त्या शक्तिर्नात्रासु कारणम् ॥ तस्मात् यथा मम बाल्ये दामोदरत्व-लीलायामैकदैव किङ्किण्या बन्धनात् परिच्छिन्नत्वं दाम्ना स्वाबन्धादपरिच्छिन्नत्वं चातर्क्यमेव, तथैव ममाजत्व-जन्मवत्त्वे चातर्क्ये एव । दुर्बोधमैश्वर्य्यञ्चाह—लोकमहेश्वरं तव सारथिमपि सर्व्वेषां लोकानां महान्तमीश्वरं यो वेद, स एव मर्त्त्येषु मध्ये असंमूढः, सर्व्वपापैर्भक्तिविरोधिभिः । यस्तु अजत्वानादित्व-सर्व्वेश्वरत्वान्येव वास्तवानि स्युर्जन्मवत्त्वादीनि तु अनुकरण-मात्रसिद्धानीति व्याचष्टे, स संमूढ एव सर्व्वपापैर्न प्रमुच्यत इत्यर्थः ॥३॥

गी०भू०—इदं तादृशमद्विषयकं ज्ञानं कस्यचिदेव भवतीति भावेनाह—यो मामिति । मर्त्त्येषु यतमानेष्वपि सहस्रेषु मध्ये यो यादृच्छिक-मत्तत्त्ववित् सत्प्रसङ्गी कश्चिज्जनो मामनादिमजं लोक-महेश्वरं च वेत्ति, सोऽसंमूढः सर्व्वपापैः प्रमुच्यत इति सम्बन्धः । अत्र 'अजम्'इत्यनेन प्रधानादचिद्वर्गात् संसारिवर्गाच्च भेदः । आद्यस्य स्वपरिणामेनान्तस्य देहजन्मना च जन्मित्वात् ; 'अनादिम्'इत्यनेन विशेषिते तु मुक्तचिद्वर्गाच्च भेदस्तस्याजत्वमादिमदेव देहसम्बन्धेन जन्मित्वस्य पूर्व्ववृत्तित्वात् , 'लोकमहेश्वरम्' इत्यनेन नित्यमुक्तचिद्वर्गात् प्रकृतिकालाभ्याञ्च भेदस्तेषामनाद्यजत्वे सत्यपि लोकमहेश्वरत्वाभावात् । पुन 'अनादिम्'इत्यनेन विशे-



षिते विधि-रुद्राभ्याञ्च भेदस्तयोर्लोकमहेश्वरतायाः सादित्वात सर्व्वैश्वरेणैव तयोः सेत्यन्यत्र विस्तरः । इत्थञ्च सर्व्वदा हेयसम्बन्धाभावान्नित्यसिद्धसार्व्वैश्वर्य्याच्च सर्व्वेतरविलक्षणं यो वेत्ति, स मद्भक्त्युत्पत्तिप्रतीपैर्निखिलैः कर्म्मभिर्विमुक्तो मद्भक्तिं विन्दति ; असंमूढोऽन्यसजातीयतया मज्ज्ञानं संमोहस्तेन विवर्जितः—न च देवक्यां जातस्य ते कथमजत्वं तस्यामजत्वमविहायैव जातत्वात् ॥३॥

बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।
सुखं दुःखं भवोऽभावो भयं चाभयमेव च ॥४॥
अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥५॥

सारा०व०—न च शास्त्रज्ञाः स्वबुद्ध्यादिभिः मत्तत्वं ज्ञातुं शक्नुवन्ति, यतो वुद्ध्यादीनां सत्त्वादिवन्मायागुणजन्यत्वान्मत्त एव जातानामपि गुणातीते मयि नास्ति स्वतः प्रवेशयोग्यतेत्याह—वुद्धिः सूक्ष्मार्थनिश्चयसामर्थ्यम् , ज्ञानमात्मानात्मविवेकः, असम्मोहो वैयग्र्याभावः-एते त्रयो भावा मत्तत्त्वज्ञानहेतुत्वेन सम्भाव्यमाना इव, न तु हेतवः । प्रसङ्गादन्यानपि भावान् लोकेषु दृष्टान् न स्वत एवोद्भूतानाह-क्षमा सहिष्णुत्वम्, सत्यं यथार्थभाषणं, दमो बाह्येन्द्रियनिग्रहः, शमोऽन्तरिन्द्रियनिग्रहः-एते सात्त्विकाः । सुखं सात्त्विकम् , दुःखं तामसम् , भवाभावौ जन्ममृत्युदुःखविशेषौ, भयं तामसमभयं ज्ञानोत्थं सात्त्विकम् , राजसाद्युत्थं राजसम् , समतात्मौपम्येन सर्व्वत्र सुखदुःखादि-दर्शनमहिंसा-समते सात्त्विक्यौ, तुष्टिः सन्तुष्टिः, सा निरुपाधिः सात्त्विकी, सोपाधिस्तु राजसी, तपो-दानेऽपि सोपाधिनिरुपाधित्वाभ्यां सात्त्विक-राजसे, यशोऽयशस्यपि तथा । मत्त इति-एते मन्मायातो भवन्तोऽपि

शक्तिशक्तिमतोरैक्यात् मत्त एव ॥४-५॥

गी०भू०—अथात्मनः सर्व्वादित्वं सर्व्वेश्वरत्वञ्च प्रपञ्चयति—बुद्धिरिति द्वाभ्याम्। 'बुद्धिः' सूक्ष्मार्थबिबेचनसामर्थ्यं ; 'ज्ञानं' चिदचिद्वस्तुबिबेचनम् , 'असंमोहः' व्यग्रत्वाभावः, 'क्षमा' सहिष्णुता, 'सत्यं' यथादृष्टार्थबिषयं परहितभाषणम् , 'दम' अनर्थबिषयाच्छ्रोत्रादेर्नियमनम् , 'शमः' तस्मान्मनसः, 'सुखम्' आनुकूल्येन वेद्यम् , दुःखं तु प्रातिकूल्येन वेद्यम् , 'भवः' जन्म ; 'अभावः' मृत्युः, 'भयम्' आगामिदुःखकारणवीक्षणाद्वित्रासः, तन्निवृत्तिः 'अभयम्', 'अहिंसा' परपीड़नाजनकता, 'समता' रागद्वेषशून्यता, 'तुष्टिः' अदृष्टलब्धेन सन्तोषः, 'तपः' वेदोक्तकायक्लेशः, 'दानं' स्वभोग्यस्य सत्पात्रेऽर्पणम् , 'यशः' साद्गुण्यख्यातिः, तद्विपरीतम् 'अयशः', एवमादयो भावा भूतानां देबमानवादीनां मत्तो मत्सङ्कल्पादेव भबन्तीत्यहमेव तेषां हेतुरित्यर्थः। पृथग्विधा भिन्नलक्षणा ॥४-५॥

महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥६॥

सारा०ब०—बुद्धिज्ञानासम्मोहान् स्वतत्त्वज्ञानेऽसमर्थानुक्त्वा तत्त्वतोऽपि तत्रासमर्थानाह—महर्षयः सप्त मरीच्यादयस्तेभ्योऽपि पूर्व्वेऽन्ये चत्वारः सनकादयो, मनवश्चतुर्द्दश स्वायम्भुवादयो मत्त एव हिरण्यगर्भात्मनः सकाशाद्भवो जन्म येषां ते। मानसा मन आदिभ्य उत्पन्ना जाता अभूवन्नित्यर्थः—येषां मरीच्यादीनां सनकादीनाञ्चेमा ब्राह्मणाद्या लोके वर्त्तमानाः प्रजाः पुत्रपौत्रादिरूपाः शिष्य प्रशिष्यरूपाश्च ॥ ६ ॥

गी०भू०—इतश्चैतदेवमित्याह—महर्षय इति। सप्त भृग्वादयस्तेभ्योऽपि पूर्व्वे प्रथमाश्चत्वारः सनकादय एकादशैते महर्षयस्तथा मनवश्चतुर्द्दश स्वायम्भुवादय एवं पञ्चविंशतिरेते मानसा हिरण्यगर्भात्मनो मम मनःप्रभृतिभ्यो जाता मद्भावा मच्चिन्तनपरास्तत्प्रभावेनोपलब्ध-मज्‌ज्ञानैश्वर्य्यशक्तय इत्यर्थः—येषां भृग्वादीनां पञ्चविंशतेरिमा ब्राह्मणक्षत्रियादयः प्रजा जन्मना विद्यया च सन्ततिरूपा भवन्ति ॥६॥



एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।
सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥७॥

सारा०ब०—किन्तु भक्त्याहमेकया ग्राह्यः इति मदुक्तेर्मदनन्यभक्त एव मत्प्रसादान्मद्वाचि दृढ़मास्तिक्यं दधानो मत्तत्त्वं वेत्तीत्याह—एतां संक्षेपेणैव वक्ष्यमाणां विभूतिं योगं भक्तियोगञ्च यस्तत्त्वतो वेत्ति, मत्प्रभोः श्रीकृष्णस्य वाक्यत्वादिदमेव परमं तत्त्वमिति दृढ़तरास्तिक्यवानेव यो वेत्ति सः। अविकल्पेन निश्चलेन योगेन मत्तत्त्वज्ञानलक्षणेन युज्यते युक्तो भवेदत्र नास्ति कोऽपि सन्देहः ॥ ७ ॥

गी०भू०—उक्तार्थज्ञानफलमाह—एतामिति। एतां विधिरुद्रादिदेवतासनकादिमहर्षिस्वायम्भुवादिमनुप्रमुखः कृत्स्नप्रपञ्चो मदधीनस्थिति-प्रवृत्ति-ज्ञानैश्वर्य्यशक्तिको भवतीत्येवं पारमैश्वर्य्यलक्षणां विभूतिं, योगमनाद्यजत्वादिभिः कल्याणगुणरत्नैर्मम सम्बन्धञ्च यो वेत्ति सर्व्वेश्वरेण सर्व्वज्ञेन वासुदेवेनोपदिष्टमिदं तात्त्विकं भवतीति दृढ़विश्वासेन यो गृह्णाति स अविकल्पेन स्थिरेण योगेन मद्भक्तिलक्षणेन युज्यते सम्पन्नो भवति—एतादृशतया मज्ज्ञानं मद्भक्तेरुत्पादकं विवर्द्धकञ्चेति भावः ॥७॥

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥८॥

सारा०ब०—तत्र महैश्वर्य्यलक्षणां बिभूतिमाह-अहं सर्व्वस्य प्राकृताप्राकृतवस्तुमात्रस्य प्रभवः उत्पत्ति-प्रादुर्भावयोः हेतुः। मत्त एवान्तर्यामिस्वरूपात् सर्व्वं जगत् प्रबर्त्तते चेष्टते, तथा मत्त एव नारदाद्यवतरात्मकात् सर्व्वं भक्तिज्ञानतपःकर्म्मादिकं साधनं तत्तात् साध्यञ्च प्रवृत्तं भवति। ऐकान्तिक--भक्तिलक्षणं योगमाह--इति मत्त्वा आस्तिक्यतो ज्ञानेन निश्चित्य इत्यर्थः। भावो दास्यसख्यादिस्तद्युक्ताः ॥ ८ ॥

गी०भू०—अथ चतुःश्लोक्या परमैकान्तिनां भक्तिं ब्रुवन् तस्या जनकं पोषकं चात्मयाथात्म्यं तावदाह-अहमिति। स्वयं भगवान् कृष्णोऽहं सर्व्वस्यास्य बिधिरुद्रप्रमुखस्य प्रपञ्चस्य प्रभवो हेतुः, एवमेवाथर्व्वसु पठ्यते-"यो ब्रह्माणं बिदधाति पूर्व्वं यो बै वेदांश्च गापयति स्म कृष्णः" इति, "अथ पुरुषो ह बै नारायणोऽकामयत प्रजाः सृजेय" इत्युपक्रम्य नारायणाद्ब्रह्मा जायते नारायणात् प्रजापतिः प्रजायते नारायणादिन्द्रो जायते नारायणादष्टौ बसवो जायन्ते नारायणादेकादश रुद्रा जायन्ते नारायणाद्द्वादशादित्याः" इत्यादि-एष नारायणः कृष्णो बोध्यः-"ब्रह्मण्यो देबकीपुत्रः" इत्याद्युत्तरपाठात। तदाहुः-"एको वै नारायण आसीन्न ब्रह्मा न ईशानो नापो नाग्नी समौ नेमे द्यावापृथिवी न नक्षत्राणि न सूर्य्यः स एकाकी न रमते तस्य ध्यानान्तःस्थस्य यत्र छान्दोगैः क्रियमाणाष्टकादिसंज्ञका स्तुतिस्तोमः स्तोममुच्यते" इत्याद्युपक्रम्य प्रधानादिसृष्टिमभिधायाथ पुनरेव "नारायणः सोऽन्यत्कामो मनसा ध्यायत तस्य ध्यानान्तःस्थस्य तल्ललाटात्त्र्यक्षः शूलपाणिः पुरुषोऽजायत बिभ्रच्छ्रियं सत्यं ब्रह्मचर्य्यं तपोवैराग्यम्" इति, तत्र "चतुर्म्मुखो जायते" इत्यादि च, ऋक्षु च-"यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधसम्" इत्यादि, मोक्षधर्म्मे च-"प्रजापतिं च रुद्र-



ञ्चाप्यहमेव सृजामि वै। तौ हि मां न बिजानीतो मम मायाबिमोहितौ ॥" इति, वाराहे च-"नारायणः परोदेवस्तस्माज्जातश्चतुर्म्मुखः। तस्माद्रुद्रोऽभवद्देवः स च सर्व्वज्ञतां गतः ॥" इति। एवञ्च मदितरनिखिलोपादाननिमित्तभूतोऽहमित्युक्तम्, यन्मत्सम्भूतं, तत्त सर्व्वं मत्तः प्रबर्त्तते मदधीनप्रवृत्तिकमिति, मदन्यनिखिलनियन्ता चाहमित्युक्तम्। इति मत्वा ममेदृशत्वं सद्गुरुमुखान्निश्चित्य भावेन प्रेम्णा समन्विताः सन्तो बुधा मां भजन्ते ॥८॥

मच्चित्ता मद्गतप्राणा बोधयन्ति परस्परम्।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥९॥

सारा०ब०--एतादृशा अनन्यभक्ता एव मत्प्रसादाल्लब्धबुद्धियोगः पूर्व्वोक्तलक्षणं दुर्व्वोधमपि मत्तत्त्वज्ञानं प्राप्नुवन्तीत्याह-मच्चित्ता मद्रूपनामगुणलीलामाधुर्य्यास्वादेष्वेव लुब्धमनसो; मद्गतप्राणाः मां बिना प्राणान् धर्त्तुमसमर्थाः-अन्नगतप्राणा नरा इतिबत्; बोधयन्तः भक्तिस्वरूपप्रकारादिकं सोहार्द्देन ज्ञापयन्तः, मां महामधुररूपगुणलीलामहोदधिं कथयन्तो मद्रूपादिव्याख्यानेनोत्कीर्त्तनादिकं कुर्व्वन्तइत्येवं सर्व्वभक्तिप्रवर्त्तिश्रेष्ठ्यात् स्मरणश्रवणकीर्त्तनान्युक्तानि। तुष्यन्ति च रमन्ति चेति भक्त्यैव सन्तोषञ्च रमणञ्चेति रहस्यम्, यद्वा साधनदशायामपि भाग्यबशात् भजने निर्व्विघ्ने सम्पद्यमाने सति तुष्यन्ति, तदैव भाविन्यीयसाध्यदशामनुस्मृत्य रमन्ति च मनसा स्वप्रभुणा सह रमन्ति चेति रागानुगा भक्तिर्द्योतिता ॥ ९ ॥

गी०भू०—भक्तेः प्रकारमाह--मच्चित्ता इति। मच्चित्ता मत्स्मृतिपरा मद्गतप्राणा मां बिना प्राणान् धर्त्तुमक्षमाः मीना इव बिनाम्भः परस्परं मद्रूपगुणलावण्यादि बोधयन्तस्तथा मां स्व-

भक्तवात्सल्यनीरधिमतिविचित्रचरितं कथयन्तश्चेत्येवं स्मरण-श्रवणकीर्त्तनलक्षणैर्भजनैः सुधापानैरिव तुष्यन्ति, तथैव तेष्वेव रमन्ते च युवतिस्मितकटाक्षादिष्विव युवानः ॥६॥

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥१०॥

सारा०व०—ननु तुष्यन्ति च रमन्ति च इति त्वदुक्त्या त्वद्भक्तानां भक्त्यैव परमानन्दो गुणातीत इत्यवगतं, किन्तु तेषां त्वत्साक्षात्प्राप्तौ कः प्रकारः? स च कुतः सकाशात्तैरवगन्तव्य इत्यपेक्षायामाह--तेषामिति। सततयुक्तानां नित्यमेव मत्संयोगाकाङ्क्षिणां तं बुद्धियोगं ददामि तेषां हृद्वृत्तिष्वहमेव उद्भावयामीति, स बुद्धियोगः स्वतोऽन्यस्माच्च कुतश्चिदप्यधिगन्तुमशक्यः किन्तु मदेक-देयस्तदेकग्राह्य इति भावः। मामुपयान्ति मामुपलभन्ते साक्षान्मन्निकटं प्राप्नुवन्ति ॥ १० ॥

गी०भू०—ननु स्वरूपेण गुणैर्विभूतिभिश्चानन्तं त्वां कथं गुरूपदेशमात्रेण ते ग्रहीतुं क्षमेरन्निति चेत्तत्राह-तेषामिति। सततयुक्तानां नित्यं मद्योगं वाञ्छतां प्रीतिपूर्व्वकं मम याथात्म्यज्ञानजेन रुचिभरेण भजताम्, तं बुद्धियोगमहं स्वभक्तिसुखरसिको ददाम्यर्पयामि-येन ते मामुपयान्ति तद्बुद्धिं तथाहमुद्भावयामि यथानन्तगुणविभूतिं मां गृहीत्वोपास्य च प्राप्नुवन्तीति ॥१०॥

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥११॥

सारा०व०—ननु च विद्यादिवृत्तिं विना कथं त्वदधिगमः तस्मात्तैरपि तदर्थं यतनीयमेव? तत्र न हि न हीत्याह-तेषामेव



न त्वन्येषां योगिनाम् अनुकम्पार्थं--मदनुकम्पा येन प्रकारेण स्यात्तदर्थमित्यर्थः। तैर्मदनुकम्पाप्राप्तौ कापि चिन्ता न कार्य्या यतस्तेषां मदनुकम्पा-प्राप्त्यर्थमहमेव यतमानो वर्त्त एवेति भावः। आत्मभावस्थः तेषां बुद्धिवृत्तौ स्थितः। ज्ञानं मदेकप्रकाश्यत्वान्न सात्त्विकं निर्गुणत्वेऽपि भक्त्युत्थज्ञानतोऽपि विलक्षणं यत्तदेव दीपस्तेन। अहमेव नाशयामीति तैः कथं तदर्थं प्रयतनीयम्? तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्" इति मदुक्तेस्तेषां व्यवहारिकः पारमार्थिकश्च सर्व्वोऽपि भारो मया वोढ़मङ्गीकृत एवेति भावः।

श्रीमद्गीता सर्व्वसारभूता भूतापतापहृत् ।
चतुःश्लोकीयमाख्याता ख्याता सर्व्वनिशर्म्मकृत् ॥११॥

गी०भू०—ननु चिरन्तनस्याविद्या-तिमिरस्य सत्त्वात्तेषां हृदि कथं तत्प्रकाशः स्यादिति चेत्तत्राह-तेषामेवेति। तेषामेव मां विना प्राणान् धर्त्तुमसमर्थानां मदेकान्तिनामेव, न तु सनिष्ठानामनुकम्पार्थं मत्कृपा-पात्रत्वार्थम्। अहमेवात्मभावस्थोऽरविन्दकोषे भृङ्ग इव तद्भावे स्थितो दिव्यस्वरूप गुणांस्तत्र प्रकाशयंस्तद्विषयकज्ञानरूपेण भास्वता दीपेन ज्ञानविरोध्यनादिकर्म्मरूपाज्ञानजं मदन्यविषयस्पृहारूपं तमो नाशयामि। तेषामेकान्तभावेन प्रसादितोऽहं योगक्षेमवद्बुद्धिवृत्तेरुद्भावनं तद्वर्त्तितमोविनाशञ्च करोमीति तत्सर्व्वनिर्व्वाहभारो ममैवेति न तैः कुत्राप्यर्थे प्रयतितव्यमित्युक्तम्। नवमादि-द्वये गीतागर्भेऽस्मिन् यत् प्रकीर्त्तितं, तदेव गीताशास्त्रार्थसारं बोध्यं विचक्षणैः ॥११॥

अर्जुन उवाच—

परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥१२॥

**आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।**
**असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥१३॥**

सारा०व०—संक्षेपेणोक्तमर्थं बिस्तरेण श्रोतुमिच्छन् स्तुतिपूर्व्वकमाह–परमिति । परं सर्व्वोत्कृष्टं धाम श्यामसुन्दरं बपुरेव परंब्रह्म,–"गृहदेहत्विट्प्रभावा धामानि" इत्यमरः । तद्धामैव भवान् भवति । जीबस्येब तव देह-देहि-बिभागो नास्तीति भावः । धाम कीदृशम् ? परं पबित्रं द्रष्टृणामबिद्यामालिन्यहरम्, अतएब ऋषयोऽपि त्वां शाश्वतं पुरुषमाहुः पुरुषाकारस्यास्य नित्यत्वं बदन्ति ॥ १२-१३ ॥

गी०भू०—संक्षेपेण श्रुतां बिभूतिं बिस्तरेण श्रोतुमिच्छन्नर्ज्जुन उवाच–परमिति । भवानेव–"सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रूयमाणं परं ब्रह्म, भवानेब–"तस्मिन्नेवाश्रिताः सर्व्वे तदु नात्येति कश्चन" इति श्रूयमाणं परं धाम निखिलाश्रयभूतं वस्तु, भवानेव–"परमं पवित्रं ज्ञात्वा देवं मुच्यते सर्व्वपापैः सर्व्वं पाप्मानं तरति नैनं पाप्मा तरति" इत्यादि श्रूयमाणं स्मर्त्तुरखिलपापहरं बस्तु इत्यहं वेद्मि । तथा सर्व्वे तदनुकम्पिता ऋषयस्तेषु प्रधानभूता नारदादयश्च "तस्मात् कृष्ण एव परो देवस्तं ध्यायेत्तं रसेत्तं भजेत्तं यजेत्" इति, "ओंतत्सत्" इति "जन्मजराभ्यां भिन्नः स्थाणुरयमच्छेद्योऽयम्" इति श्रुत्यर्थविदस्त्वां "दिव्यं पुरुषमादिदेवमजं बिभुम्" आहुस्तत्तत्कथा-सम्वादेषु पुराणेष्वितिहासेषु च स्वयञ्च ब्रबीषीति–'अजोऽपि सन्नव्ययात्मा' इति, 'यो मामजमनादिञ्च' इति, 'अहं सर्व्वस्य प्रभवः' इत्यादिभिः ॥१२-१३॥

**सर्वमेतदृतं मन्ये यन्मां बदसि केशव ।**
**न हि ते भगवन्व्यक्तिं विदुर्देवा न दानवाः ॥१४॥**



सारा०ब०—नात्र मम कोऽप्यबिश्वास इत्याह–सर्व्वमिति । किञ्च, ते ऋषयः परं ब्रह्मधामानं त्वाम् अजं आहुरेब, न तु ते व्यक्तिं जन्म बिदुः–परब्रह्मरूपस्य तब अजत्वं जन्मबत्त्वञ्च किं प्रकारमिति तु न बिदुरित्यर्थः । अतएब "न मे बिदुः सुरगणाः प्रभवं न महर्षयः" इति यत्त्वयोक्तं तत् सर्व्वं ऋतं सत्यमेव मन्ये । हे केशव,–को ब्रह्मा ईशो रुद्रश्च ताबपि बयसे स्वतत्त्वाज्ञानेन वध्नासि किं पुनर्देबदानबाद्याः त्वां न बिदन्तीति बाच्यम् इति भावः ॥ १४ ॥

गी०भू०—सर्व्वमिति । एतत् सर्व्वमहमृतं सत्यमेव, न तु प्रशंसामात्रं मन्ये । हे केशवेति–"केशो बिधिरुद्रौ, बयसे स्वतत्त्वापरिज्ञानेन निबध्नासि प्रजापतिञ्च रुद्रञ्च" इत्यादि त्वदुक्तेः–हे सर्व्वेश्वर, हे भगवन्निरवधिकातिशयषड़ैश्वर्य्यनिधे, ते व्यक्तिं परब्रह्मत्वादिगुणां श्रीमूर्त्तिं देबदानबाश्च न बिदुः यत्तोऽन्यस्वजातीयत्वबुद्ध्या त्वामबजानन्ति द्रुह्यन्ति चेति भावः ॥१४

**स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ।**
**भूतभावन भूतेश देवदेव जगत्पते ॥१५॥**

सारा०ब०–तस्मात्त्वं स्वयमेवात्मानं वेत्थ इति एब-कारेण तबाजत्व-जन्मबत्त्वादीनां दुर्घटानामपि बास्तबत्त्वमेब त्वद्भक्तो वेत्ति तच्च केन प्रकारेणेति तु सोऽपि न बेत्तीत्यर्थः । तदप्यात्मना स्वेनैब वेत्थ न साधनान्तरेण । अतएब त्वं पुरुषेषु महत्स्रष्ट्रादिष्वपि मध्य उत्तमः, न केबलमुत्तम एब, यतो भूतभावनः,भूता भुतभाबनरूपा ये तदादयः परमेष्ठ्यन्तास्तेषामीशः न केबलमीश एब, यतो देबैस्तैरेब देबः क्रीड़ा यस्येति त्वत्क्रीड़ोपकरणभूता एव ते इत्यर्थः । तदप्यपारकारुण्यबशाद्जगद्बर्त्तिनामस्मादृशानामपि त्वमेब पतिर्भबसीति चतुर्णां सम्बोधन-

पदानामर्थः; यद्वा पुरुषोत्तमत्वमेव विवृणोति-हे भूतभावन सर्व्वभूतपितः, पितापि कश्चिन्नेष्टे, तत्राह-हे भूतेश, भूतेशोऽपि कश्चिन्नाराध्यस्तत्राह-हे देव-देव देवाराध्योऽपि कश्चिन्न पालयतीति, तत्राह-हे जगत्पते ॥ १५ ॥

गी०भू०—स्वयमेव त्वमात्मना स्वेनैव ज्ञानेनात्मानं संवेत्थ-इदमित्थमिति जानासि, ये देवेषु दानवेषु च त्वद्भक्तास्ते तादृशीं त्वन्मूर्त्तिं वस्तुभूतां जानन्त्येव तस्यास्तथात्वे कथं तां न जानन्तीत्येवकारात्। हे पुरुषोत्तम सर्व्वपुरुषेश्वर! पुरुषोत्तमत्वं विवृण्वन् सम्बोधयति-हे भूतभावन सर्व्वप्राणिजनक! भूतभावनोऽपि कश्चिन्नेष्टे, तत्राह-हे भूतेश सर्व्वप्राणिनियन्तः! भूतेशोऽपि कश्चिन्न पूज्यस्तत्राह-हे देवदेव सर्व्वाराध्यानामपि देवानामाराध्य! देवदेवोऽपि कश्चिन्न रक्षकस्तत्राह-हे जगत्पते हिताहितोपदेशेन जीविकार्पणेन च विश्वपालक। ईदृशस्य ते तत्त्वं सुसिद्धमिति ॥१५॥

वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः।
याभिर्व्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥१६॥

सारा०ब०—तव तत्त्वं दुर्गमं तव विभूतिष्वेव मम जिज्ञासा जायत इति द्योतयन्नाह-वक्तुमिति। दिव्या उत्कृष्टाया आत्मविभूतयस्तावद्वक्तुमर्हसीत्यन्वयः। नन्वशेषेण मद्विभूतयः सर्व्वा वक्तुमशक्या एव तत्राह-याभिरिति ॥ १६ ॥

गी०भू०—त्वत्स्वरूपयाथात्म्यं खलु कथं तथा दुर्गमेवातस्त्वद्विभूतिष्वेव मज्जिज्ञासोपजायत इति सूचयन्नाह-वक्तुमिति। दिव्या उत्कृष्टास्तदसाधारणीयात्मनो विभूतीरशेषेण वक्तुमर्हसि-'द्वितीयार्थे प्रथमा', याभिर्व्विशिष्टस्त्वमिमान् लोकान् व्याप्य नियम्य तिष्ठसि ॥१६॥



कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन्।
केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥१७॥

सारा०ब०—योगो योगमायाशक्तिर्वर्त्तते यस्य हे योगिन्-वनमालीतिवत्। त्वामहं कथं परिचिन्तयन् सन् त्वां सदा विद्यां जानीयाम्? "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः इति "त्वदुक्तेः। तथा केषु भावेषु पदार्थेषु त्वं चिन्त्यः त्वच्चिन्तनभक्तिर्मया कर्त्तव्या इत्यर्थः ॥ १७ ॥

गी०भू०—ननु किमर्थं तत्कथनं तत्राह-कथमिति। योगो योगमायाशक्तिरस्त्यस्येति हे योगिन्! त्वां सदा परिचिन्तयन् संस्मरन्नहं कल्याणानन्तगुणयोगिनं कथं विद्यां जानीयाम्? केषु केषु च भावेषु पदार्थेषु प्रकाशमानस्त्वं मया चिन्त्यो ध्येयोऽसि?-तदेतदुभयं वद, तच्च विभूत्युद्देशेनैव सेत्स्यतीति तामुपदिशेत्यर्थः ॥१७॥

विस्तरेणात्मनो योगं विभूतिं च जनार्द्दन।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥१८॥

सारा०ब०-ननु अहं सर्व्वस्य प्रभवो मत्तः सर्व्वं प्रवर्त्तते इत्यनेनैव सर्व्वे पदार्था मद्विभूतयः मदुक्ता एव विभूतयः तथा "इति मत्त्वा भजन्ते माम्" इति भक्तियोगश्चोक्त एव? तत्राह-विस्तरेणेति। हे जनार्द्दनेति-मादृशजनानां त्वमेव हितोपदेशमाधुर्य्येण लोभमुत्पाद्य अर्द्दयसे याचयसीति वयं किं कुर्म्म इति भावः। तदुपदेशरूपममृतं शृण्वतः श्रुतिरसनया आस्वादयतः ॥ १८ ॥

गी०भू०—ननु पूर्व्वपूर्व्वत्र 'अजोऽपि सन्' इत्यादिनाजत्वादिकल्याणगुणयोगो 'रसोऽहम्' इत्यादिना विभूतयश्चासकृत् कथिताः, किं पुनः पृच्छसीति चेत्तत्राह-विस्तरेणेति। स्फुटार्थं

पद्यम्, जनार्द्दनेति प्राग्वत्। त्वद्वाक्यममृतं शृण्वतः श्रोत्ररसनयास्वादयतो मम तृप्तिर्नास्ति, अत्र त्वद्वाक्यमित्यनुक्तेरपह्नुतिः प्रथमातिशयोक्तिर्बा तयोः सङ्करो बालङ्कारः ॥१८॥

श्रीभगबानुवाच—

हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥१९॥

सारा०ब०—हन्तेत्यनुकम्पायां प्राधान्यतः प्राधान्येन यतस्तासां बिस्तरस्यान्तो नास्ति विभूतयो बिभूतर्दिव्या उत्तमा एव न तु तृणोष्ट्रकाद्याः। अत्र बिभूतिशब्देन प्राकृताप्राकृतवस्तून्येबोच्यते तानि सर्व्वाण्येब भगवच्छक्तिसमुद्भूतत्त्वाद्भगवद्रूपेणैव तारतम्येन ध्येयत्वेनाभिमतानि ज्ञेयानि ॥ १९ ॥

गी०भू०—एवं पृष्टः श्रीभगवानुबाच-हन्तेत्यनुकम्पार्थकम्, दिव्या उत्कृष्टाः, न तु तृणोष्ट्रकादयः। बिभूतय इति प्राग्वत, प्राधान्यतः प्रधानभूताः यतस्तासां बिस्तरस्यान्तो नास्ति, इह बिभूति-शब्देन नियामकत्वरूपाण्यैश्वर्य्याणि बोध्यानि—"बिभूतिर्भूतिरैश्वर्य्यम्" इत्यमरकोषात्। प्राकृतान्यप्राकृतानि च बस्तूनि भूतित्वेन बर्ण्यानि, तानि सर्व्वाणि सर्व्वेश-शक्तिव्यञ्जकत्वात् सर्व्वेशात्मना तारतम्येन भाव्यानि, मतानि यानि साक्षादीश्वररूपाणि तत्त्वेनोक्तानि, तानि तु तेन रूपेण भावनार्थान्येव, न त्वन्यबत्तच्छक्त्येकदेशरूपाणीति बोध्यं सङ्गतेरिति ॥१९॥

अहमात्मा गुडाकेश सर्वभूताशयस्थितः।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥२०॥

सारा०ब०—अत्र प्रथमं मामेवैकांशेन सर्व्वविभूतिकारणं त्वं भावयेत्याह-अहमिति। आत्मा प्रकृत्यन्तर्यामी महत्स्रष्टा पुरुषः परमात्मा, हे गुडाकेश जितनिद्र इति ध्यानसामर्थ्यं



सूचयति। सर्व्वभूतो यो वैराजस्तस्याशये स्थित इति समष्टिबिराडन्तर्यामी। तथा सर्व्वेषां भूतानामाशये स्थित इति व्यष्टिबिराडन्तर्य्यामी च। भूतानामादिर्जन्म मध्यं स्थितिरन्तः संहारः, तत्राद्धेतुरहमित्यर्थः ॥ २० ॥

गी०भू०—तत्र ताबन्मामेब त्वं महत्स्रष्ट्रादित्रिरूपेण स्वांशेन निखिलबिभूतिहेतुं बिचिन्तयेत्याशयेनाह—अहमात्मेति। हे गुडाकेशेति बिजितनिद्रस्य तद्बिचिन्तनक्षमत्वं व्यज्यते। आत्मा बिभुविज्ञानानन्दो महत्स्रष्ट्रादित्रिरूपः परमात्माहमस्मच्छब्दार्थः सर्व्वभूताशयस्थितस्त्वया विचिन्त्यः। सर्व्वभूता प्रधानादिपृथिव्यन्ततत्त्वरूपा या मूलप्रकृतिस्तस्या आशयेऽन्तः कारणोदशयरूपेणाहमेव प्रकृत्यन्तर्यामी स्थितः, तथा सर्व्वभूतः सर्व्वजीबाभिमानी यो वैराजस्तस्याशये गर्भोदशयरूपेणाहमेव समष्टिबिराडन्तर्यामी स्थितः, सर्व्वेषां भूतानां जीवानामाशये क्षीरोदशयरूपेणाहमेव व्यष्टिविराडन्तर्य्यामी स्थित इति तानि त्रीणि रूपाणि मद्बिभूतित्त्वेन त्वया बिचिन्त्यानीत्यर्थः। सुबालोपनिषदि, "प्रकृत्यादिसर्व्वभूतान्तर्यामी सर्व्वशेषी च नारायणः" पठ्यते, सात्वततन्त्रे त्रयः पुरुषावताराः स्मृताः—"विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः। एकन्तु महतः स्रष्टृ द्वितीयन्त्वण्डसंस्थितम्। तृतीयं सर्व्वभूतस्थं तानि ज्ञात्वा बिमुच्यते ॥" इति। ते च वासुदेवस्य कृष्णस्यावताराः—"यः कारणार्णबजले भजति स्म योग-निद्राम्" इत्यादिका ब्रह्मसंहिता-पद्यत्रयात्। भूतानामादिरुत्पत्तिर्मध्यं पालनमन्तश्च संहारस्तत्तद्धेतुरहमेबोक्तपुरुषलक्षणस्त्वया भाव्यः ॥२०॥

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान्।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥२१॥

सारा०ब०—अथ निर्द्धारण-षष्ठ्या क्वचित सम्बन्ध-षष्ठ्या च विभूतीराह यावदध्यायसमाप्तिः। आदित्यानां द्वादशानां मध्ये विष्णुरहमिति-तन्नामा सूर्य्यो मद्विभूतिरित्यर्थः ; एवं सर्व्वत्र प्रकाशकानां ज्योतिषां मध्ये अंशुमान् महाकिरणमाली रविरहम्, मरीचिः पवनविशेषः ॥ २१ ॥

गी०भू०—आदित्यानां द्वादशानां मध्ये विष्णुर्वामनोऽहं, ज्योतिषां प्रकाशानां मध्येऽंशुमान् विश्वव्यापिरश्मीरविरहं, मरुतामूनपञ्चाशत्संख्यकानां मध्ये मरीचिरहं, नक्षत्राणामधिपतिः शशी सुधावर्षी चन्द्रोऽहम, अत्र "निर्द्धारणे षष्ठी" प्रायेण, क्वचित् सम्बन्धेऽपीति बोध्यम् ॥२१॥

वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥२२॥

सारा०ब०—वासव इन्द्रो ; भूतानां सम्बन्धिनी चेतना ज्ञानशक्तिः ॥ २२ ॥

गी०भू०—वेदानां मध्ये गीतमाधुर्य्येणोत्कर्षात् सामवेदोऽहं, देवानां मध्ये वासवस्तेषां राजा इन्द्रोऽहम, इन्द्रियाणां मध्ये दुर्ज्जयं तेषां प्रवर्त्तकश्च मनोऽहं, भूतानां सम्बन्धिनी चेतना ज्ञानशक्तिरहम ॥२२॥

रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम् ।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥२३॥

सारा०ब०—वित्तेशः कुबेरः ॥ २३ ॥

गी०भू०—रुद्राणामेकादशानां मध्ये शङ्कराख्यो रुद्रोऽहं, यक्षरक्षसामाधिपो वित्तेशः कुबेरोऽहं, वसूनामष्टानां मध्ये पावकोऽग्निरहं, शिखरिणामत्युच्छ्रितानां मध्ये मेरुः स्वर्णाचलोऽहम ॥२३



पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।
सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥२४॥

सारा०ब०—सेनानीनामित्यार्षम् ; स्कन्दः कार्त्तिकेयः ॥ २४ ॥

गी०भू०—इन्द्रस्य सर्व्वराजमुख्यत्वात्तत्पुरोहितं बृहस्पतिं सर्व्वपतिं राजपुरोहितानां मुख्यं मां विद्धीति सोऽहमित्यर्थः, सेनानीनामिति-नुडागमस्त्वार्षः, सर्व्वराजसेनानां मध्ये स्कन्दः कार्त्तिकेयोऽहं, सरसां स्थिरजलानां मध्ये सागरोऽहम् ॥२४॥

महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥२५॥

सारा०ब०—एकमक्षरं प्रणवः ॥ २५ ॥

गी०भू०—महर्षीणां ब्रह्मपुत्राणां मध्येऽतितेजस्वी भृगुरहं, गिरां पदलक्षणानां वाचां मध्ये एकमक्षरं प्रणवोऽहमस्मि, यज्ञानां मध्ये जपयज्ञोऽस्मि-तस्याहिंसात्मकत्वेनोत्कृष्टत्वात, स्थावराणां स्थितिमतां मध्ये हिमाचलोऽहं, अत्युच्चत्वेनातिस्थैर्य्येण चार्थभेदान्मेरुहिमालययोर्विभूत्योर्भेदः ॥२५॥

अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥२६॥
उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नाराणां च नराधिपम् ॥२७॥

सारा०ब०—अमृतोद्भवममृतमथनोद्भूतम् ॥ २७ ॥

गी०भू०—पूज्यत्वेन सर्व्ववृक्षाणां मध्ये श्रेष्ठोऽश्वत्थोऽहं, देवर्षीणां मध्ये परमभक्तत्वेनोत्कृष्टो नारदोऽहं, गन्धर्व्वाणां मध्येऽतिगायकत्वेनोत्कृष्टत्वाच्चित्ररथोऽहं, सिद्धानां स्वाभाविकाणि-

मादिमतां कपिलः कार्दमिमुर्निरहम् ॥२६॥

गी०भू०—अश्वानां मध्ये उच्चैःश्रबसं, गजेन्द्राणां मध्ये ऐराबतं च मां बिद्धि-अमृतोद्भवममृतार्थकात् क्षीराब्धिमथनाज्जातमिति द्वयोर्बिशेषणम् , नराधिपं राजानमसह्यतेजसं धर्म्मिष्ठम् ॥२७

**आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।**
**प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥२८॥**

सारा०ब०-कामधुक् कामधेनुः ; कन्दर्पाणां मध्ये प्रजनः प्रजोत्पत्तिहेतुः कन्दर्पोऽहम् ॥ २८ ॥

गी०भू०—आयुधानामस्त्राणां मध्ये बज्रं पबिरहं, कामधुक् बाञ्छितपूरयित्री कामधेनुरहं, प्रजनः सन्तानोत्पादकः कन्दर्पः कामोऽहं-रतिसुखमात्रहेतुः स नाहमिति च-शब्दात्, सर्पाणामेकशिरसां मध्ये बासुकिरहम् ॥२८॥

**अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।**
**पितृणामर्यमा चास्मि यमः संयमतामहम् ॥२९**

सारा०ब०-यादसां जलचराणाम् संयमतां दण्डयताम् ॥२९॥

गी०भू०—नागानामनेकशिरसां मध्येऽनन्तः शेषोऽहं, यादसां जलजन्तूनामधिपो बरुणोऽहं, पितृणां राजार्य्यमाख्यः पितृदेबोऽहं, संयमतां दण्डयतां मध्ये न्याय्यदण्डकृत् यमोऽहं-छादेशाभाव आर्षः ॥२९॥

**प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।**
**मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥३०॥**

सारा०ब०-कलयतां बशीकुर्व्वताम् , मृगेन्द्रः सिंहः , वैनतेयो गरुडः ॥ ३० ॥



गी०भू०—दैत्यानां दितिवंश्यानां मध्ये तेषामधिपतिर्भगबन्निष्ठातिशयाद्गरीयान् प्रह्लादोऽहं, कलयतां बशीकुर्व्वतां मध्ये कालोऽहं, मृगाणां पशूनां मध्येऽतिबिक्रमेणोत्कृष्टो मृगेन्द्रः सिंहोऽहं, पक्षिणां मध्ये बिष्णुरथत्वेनातिश्रेष्ठो वैनतेयो गरुड़ोऽहम् ॥३०

**पवनः पवतामस्मि रामः शस्त्रभृतामहम ।**
**झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥३१॥**

सारा०ब०-पवतां वेगवतां पबित्रीकुर्व्वतां वा मध्ये, रामः परशुरामः तस्यावेशावतारत्वादावेशानाञ्च जीवबिशेषत्वाद् युक्तमेव विभूतित्वम् , तथा च भागवतामृतधृत-पाद्मवाक्यं-"एतत्तोक्त थितं देवि जामदग्नेर्महात्मनः । शक्त्यावेशावतारस्य चरितं शार्ङ्गिणः प्रभोः॥' 'आविष्टो भार्गवे चाभूत्' इति च। आवेशावतारलक्षणञ्च तत्रैव भागवतामृते यथा-ज्ञानशक्त्यादिकलया यत्राविष्टो जनार्दनः। त आवेशा निगद्यन्ते जीवा एब महत्तमाः ॥" इति ; झषाणां मत्स्यानां मकरो मत्स्यजातिबिशेषः स्रोतसां स्रोतस्वतीनाम् ॥३१॥

गी०भू०—पबतां पाबनानां वेगवतां च मध्ये पवनो बायुरहं, रामः परशुरामः, झषाणां मत्स्यानां मध्ये मकरस्तज्जातिबिशेषोऽहं, स्रोतसां प्रबहज्जलानां मध्ये जाह्नवी गङ्गाहम् ॥३१॥

**सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।**
**अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥३२॥**

सारा०ब०--सृज्यन्त इति सर्गा आकाशादयस्तेषामादिः सृष्टिरन्तः संहारः, मध्यं पालनञ्च इति सृष्टिस्थितिप्रलया मद्विभूतित्वेन ध्येया इत्यर्थः। अहमादिश्च मध्यञ्चेत्यत्र सृष्ट्यादिकर्त्ता परमेश्वर एवोक्तः। विद्यानां ज्ञानानां मध्ये अध्यात्मविद्या आत्मज्ञानम् , प्रवदतां स्वपक्षस्थापन-परपक्षदूषणादि-

रूपजल्पबितण्डादिकुर्व्वतां बादस्तत्त्वनिर्णयः प्रवृत्तिसिद्धान्ते यः सोऽहम् ॥ ३२ ॥

गी०भू०—सर्गाणां महदादीनां जड़सृष्टीनामादिरन्तो मध्यश्चाहमिति तेषां सर्गसंहारपालनानि मद्विभूतितयाभ व्यानीत्यर्थः,–'अहमादिश्च' इत्यादौ मत्स्वांशचेतनानां भूतानां सर्गादिहेतुर्मद्विभूतिरित्युक्तमतो न पुनःपुनरुक्तिः ; "अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। धर्म्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्द्दश" इत्युक्तानां बिद्यानां मध्येऽध्यात्मविद्या सपरिकरपरमात्मनिर्णेत्री चतुर्लक्षणी वेदान्तबिद्याहमेवेत्यर्थः, प्रबदतां सम्बन्धी यो बादः सोऽहं; तेषां खलु बाद-जल्प-बितण्डास्तिस्रः कथाः प्रसिद्धाः–तत्रोभयसाधनवती बिजिगीषु कथा 'जल्प', यत्रोभाभ्यां प्रमाणेन तर्केण स्वपक्षः स्थाप्यते छल-जाति-निग्रहस्थानैः परपक्षो दूष्यते, स्वपक्षस्थापनहना परपक्षदूषणाबसाना कथा 'बितण्डा', एते प्रबदतोर्विजिगीष्वोः शक्तिमात्रपरीक्षके निष्फले तत्त्वबुभुत्सुकथा 'वादः'–स च तत्त्वनिर्णयफलकत्वेनोत्कृष्टत्वान्मद्विभूतिरिति ॥३२॥

अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।
अहमेवाक्षयः कालो धाताऽहं विश्वतोमुखः ॥३३॥

सारा०ब०––सामासिकस्य समास-समूहस्य मध्ये द्वन्द्वः उभयपदार्थप्रधानत्वेन तस्य समासेषु श्रैष्ठ्यात्, अक्षयः कालः संहर्तॄणां मध्ये महाकालो रुद्रः बिश्वतोमुखश्चतुर्मुखोऽहं धाता स्रष्टॄणां मध्ये ब्रह्मा ॥ ३३ ॥

गी०भू०—अक्षराणां सर्व्वेषां बर्णानां मध्येऽहमकारोऽस्मि–"अकारो वै सर्व्वा बाक्" इति श्रुतिश्च ; सामासिकस्य समाससमूहस्य मध्ये द्वन्द्वोऽहं–अव्ययीभावतत्पुरुषबहुब्रीहिषूभयपदार्थ-



प्रधानता-विरहिषु मध्ये तस्योभयपदार्थप्रधानतयोत्कृष्टत्वात ; संहर्तॄणां मध्येऽक्षयः कालः संकर्षणमुखोत्थः कालाग्निरहं, स्रष्टॄणां मध्ये बिश्वतोमुखश्चतुर्वक्त्रो धाता विधिरहम् ॥३३॥

मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
कीर्तिः श्रीर्व्वाक् च नारीणां स्मृतिर्मेधा धृतिःक्षमा ॥३४

सारा०ब०––प्रतिक्षणिकानां मृत्यूनां मध्ये सर्व्वहरः सर्व्वस्मृतिहरो मृत्युर्हस्मि, यदुक्तं-'मृयुरत्त्यन्तविस्मृतिः'इति। भबिष्यतां भाबिनां प्राणिबिकाराणां मध्ये उद्भवः प्रथमबिकारो जन्माहम्, नारीणां मध्ये कीर्त्तिः ख्यातिः, श्रीः कान्तिः, बाक् संस्कृता वाणीति तिस्रस्तथा स्मृत्यादयश्चतस्रः च--कारात् मूर्त्त्यादयश्चान्या धर्म्मपत्न्यश्चाहम् ॥ ३४ ॥

गी०भू०—प्रातिक्षणिकानां मृत्यूनां मध्ये सर्व्वस्मृतिहरो मृत्युरहं, भविष्यतां भाविनां षण्णां प्राणिबिकाराणामुद्भवो जन्माख्यः प्रथमबिकारोऽहं, नारीणां मध्ये कीर्त्त्यादयः सप्त मद्विभूतयः ; दैबता ह्येताः, यासामाभासेनापि नराः श्लाघ्या भवन्ति ; तत्र कीर्त्तिर्धार्म्मिकत्वादिसाद्गुण्यख्यातिः, श्रीस्त्रिवर्गसम्पत्त कायश्रुतिर्व्वा, बाक् सर्व्वार्थव्यञ्जका 'संस्कृतभाषा', स्मृतिरनुभूतार्थस्मरणशक्तिः, मेधा बहुशास्त्रार्थविधारणशक्तिः, धृतिश्चापल्यप्राप्तौ तन्निबर्त्तनशक्तिः, क्षमा हर्षे बिषादे च प्राप्ते निर्व्विकारचित्तता ॥३४॥

बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।
मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥३५॥

सारा०ब०-वेदानां सामवेदोऽस्मीत्युक्तम्, तत्र साम्नामपि मध्ये बृहत् साम–"त्वामृद्धि हवामहे" इत्यस्यां ऋचि बिगीय-

मानं बृहत साम, छन्दसां मध्ये गायत्रीनाम छन्दः ; कुसुमाकरो वसन्तः ॥ ३५ ॥

गी०भू०—'वेदानां सामवेदोऽस्मि' इत्युक्तं प्राक्, तत्रान्यं बिशेषमाह-बृहदिति । साम्मामृगक्षरारूढ़ानां गीतिबिशेषाणां मध्ये "त्वामिद्धिहवामहे" इत्यस्यामृचि गीति बिशेषो बृहत्साम-तच्चातिरात्रे पृष्ठस्तोत्रं सर्व्वेश्वरत्वेनेन्द्रस्तुतिरूपमन्यसामोत्कृष्टत्वादहं, छन्दसां नियताक्षरपादत्वरूपच्छन्दोबिशिष्टानामृचां मध्ये गायत्री ऋगहं-द्विजातेर्द्वितीयजन्महेतुत्वेन तस्याः श्रैष्ठ्यात्, "गायत्री वा इदं सर्व्वं भूतं यदिदं किञ्च" इति ब्रह्मावतारत्वश्रवणाच्च, मार्गशीर्षोऽहमित्यभिनबधान्यादिसम्पत्त्या तस्यान्येभ्यः श्रैष्ठ्यात, कुसुमाकरो बसन्तोऽहमिति-शीतातपाभावेन बिबिधसुगन्धिपुष्पमयत्वेन, मदुत्सवहेतुत्वेन च तस्यान्येभ्यः श्रैष्ठ्यात् ॥३५॥

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥३६॥

सारा०ब०--छलयतामन्योऽन्यवञ्चनपराणां सम्बन्धि द्यूतमस्मि, जेतॄणां जयोऽस्मि, व्यबसायिनामुद्यमवतां व्यबसायोऽस्मि, सत्त्वबतां बलबतां सत्त्वं बलमस्मि ॥ ३६ ॥

गी०भ०-छलयतां मिथो बञ्चनं कुर्व्वतां सम्बन्धि द्यूतं सर्व्वस्वहरमक्षदेवनाद्यहं, तेजस्विनां प्रभाववतां सम्बन्धि तेजः प्रभावोऽहं, जेतॄणां सम्बन्धी जयोऽहं, व्यबसायिनामुद्यमिनां सम्बन्धी व्यबसायः फलबानुद्यमोऽहं, सत्त्ववतां बलिनां सम्बन्धी सत्त्वं बलमहम् ॥३६॥

वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनंजयः ।
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥३७॥



सारा०ब०-वृष्णीनां मध्ये वासुदेवो वसुदेबो मत्पिता मद्विभूतिः-'प्रज्ञादित्वात् स्वार्थिकोऽण्' ; 'वृष्णीनामहमेबास्मि' इत्यनुक्तेरस्यान्यार्थता नेष्टा ॥ ३७ ॥

गी०भू०—बृष्णीनां मध्ये बासुदेबो बसुदेबपुत्रः सङ्कर्षणोऽहं, न च बासुदेवः कृष्णोऽहमिति व्याख्येयं-तस्य स्वयंरूपस्य बिभूतित्वायोगात्, महत्स्रष्टादीनां बामनकपिलादीनाञ्च साक्षादीश्वरत्वेऽपि बिभूतित्वेनोक्तिः स्वांशाबतारत्वात्तेन रूपेण चिन्त्यत्वबिबक्षया वा युज्यते, स्वांशत्वं चानभिव्यञ्जितसर्व्वशक्तित्वं बोध्यम्, पाण्डबानां मध्ये धनञ्जयस्त्वमहमस्मि-नराबतारत्वेनान्येभ्यः श्रैष्ठ्यात्, मुनीनां देवार्थमननपराणां मध्ये व्यासो बादरायणोऽहं-मदवतारत्वेन तस्यान्येभ्यः श्रैष्ठ्यात्, कवीनां सूक्ष्मार्थबिबेचकानां मध्ये उशनाः शुक्रोऽहं-यः कबिरिति ख्यातः ॥३७॥

दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥३८॥

सारा०ब०—दमनकर्तॄणां सम्बन्धी दण्डोऽहम ॥ ३८ ॥

गी०भू०—दमयतां दण्डकर्तॄणां सम्बन्धी दण्डोऽहं-येनोत्पथगाः सत्पथे चरन्ति स दण्डो मद्विभूतिरित्यर्थः, जिगीषतां जेतुमिच्छतां सम्बन्धिनी नीतिर्न्यायोऽहं, गुह्यानां श्रवणमनननिदिध्यासनानां मध्ये मौनमहं-फलाव्यबधानेन श्रवणादिभ्यां तस्य श्रैष्ठ्यात, ज्ञानवतां परावरतत्त्वविदां सम्बन्धी तत्तद्विषयकज्ञानमहम् ॥३८॥

यच्चापि सर्वभूतानां वीजं तदहमर्जुन ।
न तदस्ति विना तत्स्यान्मया भूतं चराचरम् ॥३९॥

सारा०ब०—बीजं प्ररोहकारणं यत्तदहमस्मि तत्र हेतुः-मया बिना यत् स्यात् चरमचरं वा तन्नैवास्ति मिथ्यैवेत्यर्थः।। ३९ ।।

गी०भू०—यच्च सर्व्वभूतानां बीजं प्ररोहकारणं, तदप्यहम्, तत्र हेतुः-न तदिति। मया सर्व्वशक्तिमता परेशेन विना यच्चरमचरञ्च भूतं तत्त्वं स्यात्तन्नास्ति मृषैवेत्यर्थः।।३९।।

**नान्तोऽस्ति मम दिव्यानां विभूतीनां परंतप।**

**एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ।।४०।।**

सारा०ब०-प्रकरणमुपसंहरन्ति-नान्तोऽस्तीति एष तु विस्तरो बाहुल्यमुद्देशतो नाममात्रत एव कृतः ।। ४० ।।

गी०भू०—प्रकरणमुपसंहरति-नान्तोऽस्तीति । विस्तरो विस्तार उद्देशतं एकदेशेन प्रोक्तः।।४०।।

**यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।**

**तत्तदेवावगच्छ त्वं मम तेजोऽशसंभवम् ।।४१।।**

सारा०ब०-अनुक्ता अपि त्रैकालिकीर्विभूतीः संग्रहीतुमाह -यद्यदिति। विभूतिमदैश्वर्य्ययुक्तम्, श्रीमत् सम्पत्तियुक्त-मूर्जितं बलप्रभावाद्यधिकं सत्वं वस्तुमात्रम् ।। ४१ ।।

गी०भू०—अनुक्ता विभूतीः संग्रहीतुमाह-यद्यदिति। विभूतिमदैश्वर्य्ययुक्तं श्रीमत्सौन्दर्य्येण सम्पत्त्या वा युक्तमूर्जितं बलेन युक्तं वा यद्यत् सत्त्वं वस्तु भवति, तत्तदेव मम तेजोऽशेन शक्तिलेशेन सम्भवं सिद्धमवगच्छ प्रतीहीति स्वायत्तत्व-स्वव्याप्यत्वाभ्यां सर्व्वेऽभेदनिर्द्देशा नीता वामनादीनां तन्निर्द्देशास्तु सङ्गमिताः सन्ति ।।४१।।

**अथवा बहुनैतेन किं ज्ञातेन तवार्जुन।**

**विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ।।४२।।**



इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्व्वणि श्रीभगवद्गीतासुपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्ज्जुनसंवादे विभूतियोगो नाम दशमोऽध्यायः।



सारा०ब०--बहुना पृथकपृथगज्ञातेन किं फलं समुदितमेव जानीहीत्याह-विष्टभ्येति। एकांशेनैकेनैवांशेन प्रकृत्यन्तर्य्यामिना पुरुषरूपेणैवेदं सृष्टं जगद्विष्टभ्याधिष्ठानत्वाद्विधृत्याधिष्ठातृत्वाद-धिष्ठाय, नियन्तृत्वान्नियम्य, व्यापकत्वाद्व्याप्य, कारणत्वात् सृष्ट्वा स्थितोऽस्मि ।। ४२ ।।

विश्वं श्रीकृष्ण एवातः सेव्यस्तद्दत्तया धिया।
स एवास्वाद्यमाधुर्य्य इत्यध्यायार्थ ईरितः ।। (२)
इति सारार्थवर्षिण्यां हर्षिण्यां भक्तचेतसाम्।
गीतासु दशमोऽध्यायः सङ्गतः सङ्गतः सताम् ।। (३)

गी०भू०—एवमवयवशो विभूतीरुपवर्ण्य सामस्त्येन ताः प्राह--अथवेति। बहुना पृथक् पृथगुपदिश्यमानेन विभूतिविषयकेण ज्ञानेन तव किं प्रयोजनम्? हे अर्ज्जुन! चिदचिदात्मकं हरविरिञ्चिप्रमुखं कृत्स्नं जगदहमेकेनैव प्रकृत्याद्यन्तर्य्यामिणा पुरुषाख्येनांशेन विष्टभ्य स्रष्ट्रत्वात् स्रष्टा धारकत्वाद्धृत्वा व्यापकत्वाद्व्याप्य पालकत्वात् पालयित्वा च स्थितोऽस्मीति सर्जनादीनि मद्विभूतयो मद्व्याप्तेषु सर्व्वेष्वैश्वर्य्यादिसर्व्वाणि वस्तूनि मद्विभूतितया बोध्यानीति ।।४२।।

यच्छक्तिलेशात् सूर्य्याद्या भवन्त्यत्युग्रतेजसः।
यदंशेन धृतं विश्वं स कृष्णो दशमेऽर्च्च्यते ।।

इति श्रीमद्भगवद्गीतोपनिषद्भाष्ये दशमोऽध्यायः।



# एकादशोऽध्यायः

अर्जुन उवाच—

**मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।**
**यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥१॥**

सारा०ब०--एकादशे विश्वरूपं दृष्ट्वा संभ्रान्तधीः स्तुवन् ।
पार्थ आनन्दितो दर्शयित्वा स्वं हरिणा पुनः ॥

पूर्व्वाध्यायान्ते "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति सर्व्वविभूत्याश्रयमादिपुरुषं स्वप्रियसखस्यांशं श्रुत्वा परमानन्दनिमग्नस्तद्रूपं दिदृक्षमाणो भगवदुक्तमभिनन्दति-मदनुग्रहायेति त्रिभिः। अध्यात्ममिति सप्तम्यर्थे अव्ययीभावादात्मनीत्यर्थः। आत्मनि या या संज्ञा विभूतिलक्षणा सा संजाता यस्य तद्वचः, मोहस्त्वदैश्वर्य्याज्ञानम् ॥ १ ॥

गी०भू०—एकादशे विश्वरूपं बिलोक्य त्रस्तधीः स्तुवन् ।
दर्शयित्वा स्वकं रूपं हरिणा हर्षितोऽर्ज्जुनः ॥

गी०भू०—पूर्व्वत्र 'अहमात्मा गुडाकेश सर्व्वभूताशयस्थितः' इति विभूतिकथनोपक्रमे 'विष्टभ्याहमिदं कृत्स्नम्' इति तदुपसंहारे च निखिलविभूत्याश्रयो महत्स्रष्टा पुरुषः स्वस्य कृष्णस्यावतारः; स तु महत्स्रष्टादिसर्व्वावतारीति तन्मुखात् प्रतीत्य सख्यानन्दसिन्धुनिमग्नोऽर्ज्जुनस्तत्पुरुषरूपं दिदृक्षुः कृष्णोक्तमनुवदति,—मदिति। मदनुग्रहायाध्यात्मसंज्ञितं बिभूतिबिषयकं यद्वचस्तयोक्तं, तेन मम मोहः कथं बिद्यामित्याद्युक्तो बिगतो नष्टः। अध्यात्ममात्मनि परमात्मनि त्वयि या बिभूतिलक्षणा संज्ञा सा जाता। यस्य तद्वचः-बिभक्त्यर्थेऽव्ययीभावः-परमं गुह्यमतिरहस्यं त्वदन्यागम्यमित्यर्थः॥१॥



**भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।**
**त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥२॥**

सारा०ब०--अस्मिन् षट्के तु भवाप्ययौ सृष्टिसंहारौ त्वत्त इति 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' इत्यादिना-ऽव्ययं माहात्म्यं सृष्ट्रादिकर्त्तृत्वेऽप्यधिकारासङ्गादिलक्षणं-'मया ततमिदं सर्व्वम्' इति 'न च मां तानि कर्म्माणि निबध्नन्ति' इत्यादिना ॥ २ ॥

गी०भू०—किञ्च भवेति। हे कमलपत्राक्ष! कमलपत्रे इवातिरम्ये दीर्घरक्तान्ते चाक्षिणी यस्येति प्रेमातिशयात् सौन्दर्य्यातिशयोल्लेखः। त्वत्तस्त्वद्धेतुकौ भूतानां भवाप्ययो सर्गप्रलयौ मया त्वत्तः सकाशाद्विस्तरशोऽसकृत् श्रुतौ 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' इत्यादिनाव्ययं नित्यं माहात्म्यमैश्वर्य्यं च तत्र सर्व्वकर्त्तृत्वेऽपि निर्व्विकारत्वं सर्व्वनियन्तृत्वेऽप्यसङ्गत्वमित्येवमादि त्वत्त एव मया बिस्तरशः श्रुतं-'मया ततमिदं सर्व्वम्' इत्यादिभिः ॥२॥

**एवमेतद्यथात्थ त्वमात्मानं परमेश्वर ।**
**द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥३॥**

सारा०ब०--इदानीमात्मानं त्वं यथात्थ "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितः" इति, तथैवमेव मम नात्र कोऽप्यविश्वासोऽस्तीति भावः। किन्तु तदपि संहृतार्थो बुभूषया तवैश्वरं तद्रूपं द्रष्टुमिच्छामि येनैकांशेनेश्वररूपेण त्वं जगत् बिष्टभ्य वर्त्तसे, तस्यैव ते रूपमहमिदानीं चक्षुर्भ्यां द्रष्टुमिच्छामीत्यर्थः ॥३॥

गी०भू०—एवमिति - 'विष्टभ्याहमिदम्'इत्यादिना यथा तमात्मानं त्वमात्थ ब्रवीषि तदेतदेवमेव न तत्र मे संशयलेशोऽपि,

तथापि तवैश्वरं सर्व्वप्रशास्तृ तद्रूपमहं कौतुकाद्द्रष्टुमिच्छामि। हे परमेश्वर, हे पुरुषोत्तमेति सम्बोधयन् मम तद्दिदृक्षां जानास्येव, तां पूरयेति व्यञ्जयति-मधुररसास्वादिनः कटुरसजिघृक्षावत्त्वन्माधुर्य्यानुभविनो मे त्वदैश्वर्य्यानुबुभूषाभ्युदेतीति भावः ॥३॥

मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो।
योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥४॥

सारा०ब०--योगेश्वरेति-अयोग्यस्यापि मम तद्दर्शनयोग्यतायां तब योगैश्वर्य्यमेव कारणमिति भावः ॥ ४ ॥

गी०भू०—ऐश्वर्य्यदर्शने भगवत्सम्मतिं गृह्णाति-मन्यसे यदिति जानासीच्छसि वेत्यर्थः। हे प्रभो-सर्व्वस्वामिन्! योगेश्वरेति सम्बोधयन्नयोगस्य मे त्वद्दर्शने त्वच्छक्तिरेव हेतुरिति व्यञ्जयति ॥४॥

श्रीभगवानुवाच-

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥५॥

सारा०ब०--ततश्च स्वांशस्य प्रकृत्यन्तर्य्यामिनः प्रथमपुरुषस्य "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्" इति पुरुषसूक्तप्रोक्तं रूपं प्रथममिदं दर्शयामि, पश्चात् प्रस्तुतोपयोगित्वेन तस्यैव कालरूपत्वमपि ज्ञापयिष्यामीति मनसि बिमृष्य अर्ज्जुनं प्रति साबधानो भवेत्यभिमुखीकरोति। पश्येति रूपाणीति एकस्मिन्नपि मत्स्वरूपे शतशो मत्स्वरूपाणि मद्विभूतीः ॥ ५ ॥

गी०भू०—एवमभ्यर्थितो भगवान् प्रकृत्यन्तर्य्यामिणं सहस्रशिरसं प्रशास्तृत्वप्रधानं देवाकारं स्वांशं प्रदर्शयितुं प्रकृतोपयोगित्वात्तत्रैव कालात्मकताञ्च बोधयितुमर्ज्जुनमवधापयतीत्याह-



पश्येति चतुर्षु। 'पश्य' इति पदावृत्तिर्दर्शनीयानां रूपाणामत्यद्भुतत्वद्योतनार्था च बोध्या। मे मम सहस्रशीर्षाकारेण भासमानस्यैकस्यैव शतानि सहस्राणि च बिभूतिभूतानि रूपाणि पश्य 'अर्हे लोट्'-तानि द्रष्टुमर्हो भवेत्यर्थः ॥५॥

पश्यादित्यान्वसून्रुद्रानश्विनौ मरुतस्तथा।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥६॥

गी०भू०—तान्येकदेशतः प्राह-पश्यादित्यानिति द्वाभ्याम्। अदृष्टपूर्व्वाणीति त्वयान्यैश्च पूर्व्वमदृष्टानि आश्चर्य्याण्यद्भुतानि ॥६

इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम्।
मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥७॥

सारा०ब०—परिभ्रमता त्वया वर्षकोटिभिरपि द्रष्टुमशक्यं कृत्स्नमपि जगत् इह प्रस्तावे एकस्मिन्नपि मद्देहावयवे तिष्ठति इति एकस्थं यच्चान्यत् स्वजयपराजयादिकञ्च ममास्मिन् देहे जगदाश्रयभूतकारणरूपे ॥ ७ ॥

गी०भू०—किञ्चेह मम देहे एकस्थमेकदेशस्थितं सचराचरं कृत्स्नं जगत्त्वमद्याधुनैव पश्य; यत्तात्र तत्र परिभ्रमता त्वया वर्षायुतैरपि द्रष्टुमशक्यं, तदैकदेवैकत्रैव मदनुग्रहादवलोकस्वेत्यर्थः। यच्च जगदाश्रयभूतं प्रधानमहदादिकारणस्वरूपं स्वजयपराजयादिकं चान्यद्द्रष्टुमिच्छसि, तदपि पश्य ॥७॥

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥८॥

सारा०ब०—इदमिन्द्रजालं मायामयं बा रूपमित्यर्ज्जुन मा मन्यताम्, किन्तु सच्चिदानन्दमयमेब स्वरूपमन्तर्भूतसर्व्वजगत्-

कमतीन्द्रियत्वेनैव विश्वसितुमित्येतदर्थमाह-न त्विति। अनेनैव प्राकृतेन स्वचक्षुषा मां चिद्घनाकारं द्रष्टुं न शक्यसे न शक्नोषीत्यतस्तुभ्यं दिव्यमप्राकृतं चक्षुर्ददामि, तेनैव पश्येति प्राकृतनरमानिनमर्ज्जुनं कमपि चमत्कारं प्रापयितुमेव; यतो ह्यर्ज्जुनो भगवत्पार्षदमुख्यत्वात् नरावतारत्वाच्च प्राकृत-नर इव न चर्म्मचक्षुष्कः। किञ्च साक्षाद्भगवन्माधुर्य्यमेव यः स्वचक्षुषा साक्षादनुभवति, सोऽर्ज्जुनो भगवदंशं द्रष्टुं तेनाशक्नुवन् दिव्यं चक्षुर्गृह्णीयादिति कः खलु न्यायः? एके त्वेवमाचक्षते -भगवतो नरलीलत्वमहामाधुर्य्यैकग्राहि सर्व्वोत्कृष्टं यच्चक्षुर्वर्त्तते, तच्चक्षुरनन्यभक्त इव भगवतो देवलीलत्वसम्पदं नैव गृह्णाति,- न हि सितोपलरसास्वादिनी रसना खण्डं गुडं वा स्वादयितुं शक्नोति। तस्मादर्ज्जुनाय तत्प्रार्थितश्चमत्कारविशेषं दातुं देवलीलत्वमयैश्वर्य्यं जिग्राहयिषुर्भगवान् प्रेमरसाननुकूलं दिव्यममानुषमेव चक्षुर्ददाविति। तथा दिव्यचक्षुर्दानाभिप्रायोऽध्यायान्ते व्यक्तीभविष्यतीति ॥ ८ ॥

गी०भू०—'मन्यसे यदि तच्छक्यम्' इत्यर्ज्जुनप्रार्थितं सम्पादयान्नरतं, विस्मितं कर्त्तुं तस्मै स्वदेवाकारग्राहि दिव्यं चक्षुर्भगवान् ददाविव्याह-न तु मामिति। अनेनैव मन्माधुर्य्यैकान्तेन स्वचक्षुषा युगपदुद्भातसहस्रसूर्य्यप्रख्यं सहस्रशिरस्कं मां द्रष्टुं न शक्यसे न शक्नोषि; अतस्ते दिव्यं चक्षुर्ददामि-यथाहमास्मानमतिप्रवाहाक्रान्तं व्यनज्मि, तथा त्वच्चक्षुश्चेति भावः; तेन ममैश्वरं योगं रूपं पश्य-'युज्यते अनेन' इति व्युत्पत्तेर्योगो रूपं- 'परमं रूपमैश्वरम्' इत्यग्रिमाच्च; अत्र दिव्यं चक्षुरेव दत्तं, न तु दिव्यं मनोऽपीति बोध्यम्; तादृशे मनसि दत्ते, तस्य तद्रूपे रुचिप्रसङ्गादिह दिव्यदृष्टिदानेन लिङ्गेन पार्थसारथिरूपात् सहस्रशिरसो विश्वरूपस्याधिक्यमिति यद्वदन्ति तदमी निरस्यम् ॥८॥



एवमुक्त्वा ततो राजन्महायोगेश्वरो हरिः।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥९॥
अनेकवक्त्रनयनमनेकाद्भुतदर्शनम्।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥१०॥
दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम्।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥११॥

सारा०व०--विश्वतः सर्व्वतो मुखानि यस्य तत् ॥ ११ ॥

गी०भू०-एवमुक्त्वा हरिः पार्थाय विश्वरूपं दर्शितवान्। तच्च रूपं वीक्ष्य पार्थो हरिमेवं विज्ञापितवानितीममर्थं सञ्जयः प्राह-एवमिति षड्भिः। ततो दिव्यचक्षुर्दानानन्तरं हे राजन् धृतराष्ट्र! महांश्चासौ योगेश्वरश्च हरिः ॥९॥

गी०भू०—अनेकेति – अनेकानि सहस्राणि वक्त्राणि नयनानि च यस्य तद्रूपं-'सहस्रबाहो भव विश्वमूर्त्ते' इत्यग्रिमवाक्यात्, इहानेक-बहु-सहस्र-शब्दा असंख्येयार्थ-वाचिनः- 'विश्वतश्चक्षुरुत विश्वतोमुखः' इत्यादिज्ञापकात्, अनेकानामद्भुतानां दर्शनं यत्र तत् दिव्यो गन्धो यत्र तादृगनुलेपनं यस्य तत्, देवं द्योतमानमनन्तमपारं, विश्वतः सर्व्वतो मुखानि यस्य तत् ॥१०-११॥

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता।
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥१२॥

सारा०व०—एकदैव यदि भाः कान्तिरुत्थिता भवेत्, तदा तस्य महात्मनो विश्वरूपपुरुषस्य भासः प्रभायाः कान्तेः कथञ्चित सदृशी भवेत् ॥ १२ ॥

गी०भू०—तद्दीप्तेर्नैरुपम्यमाह–दिवीति । दिवि आकाशे युगपदुत्थितस्य सूर्य्यसहस्रस्य भाः कान्तिश्चेद्युगपदुत्थिता भवेत्तर्हि सा तस्य महात्मनो बिश्वरूपस्य हरेर्भास एकस्याः कान्तेः सदृशी स्यात्तादेति–सम्भावनायां लट् । अद्भुतोपमेयमुच्यते तयोत्प्रेक्षा व्यङ्गा सती सर्व्वथा तत्कान्तेर्नैरुपम्यं व्यञ्जयति । तादृग्रूपं दर्शयामासेति पूर्व्वेणान्वयः ॥१२॥

**तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।**
**अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥१३॥**

सारा०ब०—तत्र तस्मिन् युद्धभूमावेव देबदेबस्य शरीरे जगत् ब्रह्माण्डं कृत्स्नं सर्व्वमेब गणयितुमशक्यमित्यर्थः । प्रबिभक्तं पृथक्पृथक्कृतया स्थितमेकस्थमेकदेशस्थं प्रतिरोमकूपस्थं प्रतिकुक्षिस्थं वेत्यर्थः । अनेकधा मृन्मयं हिरण्मयं मणिमयं वा पञ्चाशत्कोटियोजनप्रमाणं शतकोटियोजनप्रमाणं लक्षकोट्यादियोजनप्रमाणं वेत्यर्थः ॥ १३ ॥

गी०भू०—ततः किमभूदित्यपेक्षायामाह–तत्रेति । तत्र युद्धभूमौ देबदेबस्य कृष्णस्य व्यञ्जितसहस्रशिरस्के शरीरे श्रीविग्रहे कृत्स्नं निखिलं जगद्ब्रह्माण्डं तदा पाण्डवोऽपश्यत् । प्रबिभक्तं पृथक्पृथग्भूतमेकस्थमिति प्राग्वत्, अनेकधेति मृण्मयं स्वर्णमयं रत्नमयं बा लघुमध्ये बृहद्भूतं वेत्यर्थः ॥१३॥

**ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः ।**
**प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥१४॥**

अर्जुन उबाच —

**पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतबिशेषसङ्घान् ।**
**ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिब्यान् ॥१५॥**



सारा०ब०—भूतबिशेषाणां जरायुजादीनां सङ्घान्, कमलासनस्थं पृथ्वीपद्मकर्णिकायां सुमेरौ स्थितं ब्रह्माणम ॥ १५ ॥

गी०भू०—एबं कृष्णतत्त्वविदर्ज्जुनस्तस्मिन् सत्त्वेन ज्ञातं सहस्रशीर्षत्वमधुना वीक्ष्याद्भुतं रसमन्वभूदित्याह–तत इति – तं व्यञ्जित-तद्रूपं कृष्णं बिलोक्येत्यर्थः । धनञ्जयेति – धीरोऽपि बिस्मयेनाबिष्टो हृष्टरोमा पुलकितो देवं शिरसा भूलग्नेन प्रणम्य कृताञ्जलिः सन्नभाषत । अत्र भयनेत्रसम्बरणादिकं तस्य नाभूत किन्त्वद्भुतो रसोऽभ्युदैदिति व्यज्यते । इह तादृशो हरिरालम्बनो मुहुर्मुहुस्तद्वीक्षणमुद्दीपनं प्रणतिपाणियोगावनुभावौ, रोमाञ्चः सात्त्विकस्तैराक्षिप्ता मतिधृतिहर्षादयः–सञ्चारिणः, एतैरालम्बनाद्यैः पुष्टो बिस्मयस्थायिभावोऽद्भुतरसः ॥१४॥

गी०भू०—किमभाषत तदाह–पश्यामीति सप्तदशभिः । तथा भूतबिशेषाणां जरायुजादीनां सङ्घान पश्यामि ब्रह्माणं चतुर्म्मुखं, कमलासने चतुर्म्मुखे स्थितं तदन्तर्यामिणमीशं गर्भोदकशयमुरगान बासुक्यादीन सर्पान् ॥१५॥

**अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपम् ।**
**नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्व विश्वरूप ॥६१**

सारा०ब०—हे बिश्वेश्वर, आदिपुरुष ॥ १६ ॥

गी०भू०—यत्र देहे देवादीन् दृष्टवांस्तं बिशिनष्टि–अनेकेति । हे बिश्वरूप ! प्रथम-पुरुष ! ॥१६॥

**किरीटिनं गदिनं चक्रिणं च**
**तेजोराशिं सर्वतो दीप्तिमन्तम् ।**
**पश्यामि त्वां दुर्निरीक्ष्यं समन्ता-**
**द्दीप्तानलार्कद्युतिमप्रमेयम् ॥१७॥**

गी०भू०—बिधान्तरेण तमेव विशिनष्टि-किरीटिनमिति । दुर्निरीक्ष्यमपि त्वामहं पश्यामि-तत्प्रसादाद्दिव्यचक्षुर्लाभात्, दुर्निरीक्ष्यतायां हेतुः-समन्ताद्दीप्तानलेति, अप्रमेयमिदमित्थमिति प्रमातुमशक्यम् ॥१७॥

त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे ॥१८

सारा०ब०—वेदितव्यं मुक्तैर्ज्ञेयं यदक्षरं ब्रह्मतत्त्वम्, निधानं लयस्थानम् ॥ १८ ॥

गी०भू०—अचिन्त्यमदैश्वर्य्यवीक्षणात्त्वमहमेवं निश्चिनोमीत्याह-त्वमिति । "अथ परा यया तदक्षरमधिगम्यते", "यत्तदद्रश्यम्" इत्यादि-वेदान्तवाक्यैर्वेदितव्यं यत् परमं सश्रीकमक्षरं तत्त्वमेव निधानमाश्रयोऽव्ययस्त्वमबिनाशी, शाश्वतधर्म्मगोप्ता वेदोक्तधर्म्मपालकस्त्वं— "स कारणं कारणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" इति मन्त्रवर्णोक्तः सनातनः पुराणः पुरुषस्त्वमेव ॥१८॥

अनादिमध्यान्तमनन्तवीर्यमनन्तवाहुं शशिसूर्यनेत्रम् ।
पश्यामि त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपन्तम् ॥

सारा०ब०--अनादीत्यत्र महाबिस्मयरससिन्धुनिमग्नस्यार्ज्जुनस्य बचसि पौनरुक्त्यं न दोषाय; यदुक्तम्-'प्रमादे बिस्मये हर्षे द्विस्त्रिरुक्तं न दुष्यति' ॥ १९ ॥

गी०भू०—अनादीति आदिमध्यावसानशून्यमनन्तानि वीर्य्याणि तदुपलक्षितानि समग्राण्यैश्वर्य्याणि षट् यस्य तमनन्तबाहुं सहस्रभुजं शशिसूर्य्योपमानि नेत्राणि यस्य तं-देबादिषु प्रणतेषु प्रसन्ननेत्रं तद्विपरीतेषु असुरादिषु क्रूरनेत्रमित्यर्थः;



दीप्तहुताशोपमानि संहारानुगुणानि बक्त्राणि यस्य तम् । अर्ज्जुनस्य बाक्ये क्वचित् पुनरुक्तिस्तस्य बिस्मयाबिष्टत्वान्न दोषाय; यदुक्तं-"प्रमादे बिस्मये हर्षे द्विस्त्रिरुक्तं न दुष्यति" इति ॥१९॥

द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
दृष्ट्वाद्भुतं रूपमिदं तवोग्रं लोकत्रयं प्रव्यथितं महात्मन् ॥२०

सारा०ब०--अथ प्रस्तुतोपयोगित्वात्तस्यैव रूपस्य कालरूपत्वं दर्शयामास-द्यावेत्यादि-दशभिः ॥ २० ॥

गी०भू०—अथ तस्यैव रूपस्य प्रकृतोपयोगित्वेन कालरूपतां दर्शितवानित्याह-द्यावेति दशभिः । द्यावापृथिव्योरन्तरमन्तरीक्षं तथा सर्व्वा दिशश्चैकेन त्वया व्याप्तम, तवेदमपरिमितमद्भुतमुग्रञ्च रूपं दृष्ट्वा लोकत्रयं प्रव्यथितं भीतं संचलञ्च भवति । हे महात्मन् सर्व्वाश्रय ! अत्रेदमवगम्यते-तदा युद्धदर्शनाय ये त्रैलोक्यस्था मित्रोदासीना देबासुरा गन्धर्व्वकिन्नरादयः समागतास्तैरपि भक्तिमद्भिर्भगवद्दत्तादिव्यनेत्रैस्तद्रूपं दृष्टं, न त्वेकेनैबार्ज्जुनेन स्वपतेव स्वाप्निकरथादीनि निजैश्वर्य्यस्य बहुसाक्षिकतार्थमेतत ॥२०॥

अमी हि त्वां सुरसङ्घा बिशन्ति
केचिद्भीताः प्राञ्जलयो गृणन्ति ।
स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः
स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥२१॥

सारा०ब०--त्वा त्वाम् ॥ २१ ॥

गी०भू०—अमी सुरसङ्घास्त्वां शरणं बिशन्ति, तेषु केचिद्भीता दूरतः स्थित्वा प्राञ्जलयः सन्तो गृणन्ति 'पाहि पाहि प्रभो-

ऽस्मान्' इति प्रार्थयन्ते, महतीं भीतिमालक्ष्य महर्षिसङ्घाः सिद्धसङ्घाश्च 'विश्वस्य स्वस्त्यस्तु' इत्युक्त्वा स्तुवन्ति ॥२१॥

**रुद्रादित्या वसवो ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।**
**गन्धर्वयक्षासुरसिद्धसङ्घा वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥२२॥**

सारा०ब०--उष्माणं पिबन्तीत्युष्मपाः पितरः-"उष्मभागा हि पितरः" इति श्रुतेः ॥ २२ ॥

गी०भू०—रुद्रेति स्फुटम् । उष्मपाः पितरः-"उष्माणं पिबन्ति" इति निरुक्तेः, "उष्मभागा हि पितर" इति श्रुतेश्च ॥२२

**रूपं महत्ते बहुवक्त्रनेत्रं महाबाहो बहुबाहूरुपादम् ।**
**बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥२३**

गी०भू०—लोकत्रयं प्रव्यथितम्' इत्युक्तमुपसंहरति-रूपं महदिति । बहुभिर्दंष्ट्राभिः करालं रौद्रम्, स्फुटमन्यत्, तथाहमित्यस्योत्तरेण सम्बन्धः ॥२३॥

**नभः स्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रम् ।**
**दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा धृतिं न विन्दामि शमंच विष्णो ॥**

सारा०ब०--शममुपशमम् ॥ २४ ॥

गी०भू०—तथैतद्रूपोपसंहारफलकं दैन्यं प्रकाशयन्नाह-नभःस्पृशमिति द्वाभ्याम् । अहञ्च त्वां दृष्ट्वा प्रव्यथितान्तरात्मा भीतोद्विग्नमनाः सन् धृतिमुपशमं च न विन्दामि न लभे, हे विष्णो! कीदृशम्?-नभःस्पृशमन्तरीक्षव्यापिनं व्यात्ताननं विस्तृतास्यम्, व्यक्तार्थमन्यत्। अत्र कालरूपत्वदर्शनहेतुको भयानकरसः स्वस्योक्तः ॥२४॥



**दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसन्निभानि ।**
**दिशो न जाने न लभे च शर्म प्रसीद देवेश जगन्निवास ॥**

गी०भू०--दंष्ट्रेति - कालानलः प्रलयाग्निस्तत्सन्निभानि तत्तुल्यानि, शर्म्म सुखम् ॥२५॥

**अमी च त्वां धृतराष्ट्रस्य पुत्राः सर्वे सहैवावनिपालसङ्घैः ।**
**भीष्मो द्रोणः सूतपुत्रस्तथासौ सहास्मदीयैरपि योधमुख्यैः ॥**
**वक्त्राणि ते त्वरमाणा विशन्ति दंष्ट्राकरालानि भयानकानि ।**
**केचिद्विलग्ना दशनान्तरेषु संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥२७॥**

गी०भू०—'यच्चान्यद्द्रष्टुमिच्छसि' इत्यनेनास्मिन् युद्धे भविष्यज्जयपराजयादिकञ्च मद्देहे पश्येति यदुक्तं तदधुना पश्यन्नाह-अमी चेति पञ्चभिः । अमी धृतराष्ट्रस्य पुत्रा दुर्योधनादयः सर्व्वे अवनिपालसङ्घैः शल्यजयद्रथादिभूपवृन्दैः सह त्वरमाणाः सन्तस्ते वक्त्राणि विशन्तीत्युत्तरेणान्वयः । अजेयत्वेन ख्याता ये भीष्मादयस्तेऽपि, असाविति सर्व्वदैव मद्विद्वेषीत्यर्थः, सूतपुत्रः कर्णः, न केवलं त एव किन्त्वस्मदीया ये योधमुख्या धृष्टद्युम्नादयस्तैः सहेति-तेऽपि प्रविशन्तीति सहोक्तिरलङ्कारः । केचिदिति तेषां मध्ये केचिच्चूर्णितैरुत्तमाङ्गैर्मस्तकैः सहिता दशनान्तरेषु दन्तसन्धिषु विलग्नाः संदृश्यन्ते मया ॥२६-२७

**यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति ।**
**तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभितो ज्वलन्ति ॥**
**यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः ।**
**तथैव नाशाय विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः ॥**

गी०भू०—प्रवेशे दृष्टान्तावाह–यथेति द्वाभ्याम् । तत्र प्रथमोऽधीपूर्व्वके प्रवेशे, द्वितीयस्तु धीपूर्व्वके बोध्यः ॥२८॥

गी०भू०—ज्वलनं वह्निम् ॥२९॥

**लेलिह्यसे ग्रसमानः समन्ताल्लोकान्समग्रान्वदनैर्ज्वलद्भिः ।**
**तेजोभिरापूर्य्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो ॥३०**

गी०भू०—योद्धृणां तन्मुखप्रवेशे प्रकारमुक्त्वा तस्य तद्भासां च तत्र प्रवृत्तिप्रकारमाह–लेलिह्यस इति । वेगेन प्रविशतः समग्रान् लोकान् दुर्य्योधनादीन् ज्वलद्भिर्वदनैर्ग्रसमानो गिलन् समन्ताद्रोषावेशेन लेलिह्यसे तद्रुधिरोक्षितमोष्ठादिकं मुहुर्मुहुर्लेढि । तवोग्रा भासो दीप्तयोऽसह्यैस्तेजोभिः समग्रं जगदापूर्य्य प्रतपन्ति । हे विष्णो ! विश्वव्यापिन् ! त्वत्तः पलायनं दुर्घटमित्यर्थः ॥३०॥

**आख्याहि मे को भवानुग्ररूपो नमोऽस्तु ते देववर प्रसीद ।**
**विज्ञातुमिच्छामि भवन्तमाद्यं न हि प्रजानामि तव प्रवृत्तिम् ॥**

गी०भू०—एवं विश्वरूपं व्यञ्जितकालशक्ति भगवन्तमुपवर्ण्य तत्तत्त्वविदप्यर्ज्जुनः स्वज्ञानदार्ढ्याय पृच्छति–आख्याहीति । 'दर्शयात्मानमव्ययम्' इति सहस्रशीर्षादिलक्षणमैश्वरं रूपं दर्शयितुमर्थितेन भगवता तद्रूपं प्रदर्श्य तस्य पुनरतिघोरा संहर्त्तृता प्रदर्श्यते । तत्रोग्ररूपो भवान् क इत्याख्याहि कथय । हे देववर ! ते नमोऽस्तु, प्रसीद त्यजोग्ररूपताम् । आद्यं भवन्तमहं विशेषेण ज्ञातुमिच्छामि, तव प्रवृत्तिं चेष्टाञ्च न हि प्रजानामि–किमर्थमेवं प्रवृत्तोऽसीति तत्प्रयोजनं चाख्याहीति ॥३१॥



श्रीभगवानुवाच––

**कालोऽस्मि लोकक्षयकृत्प्रवृद्धो लोकान्समाहर्त्तुमिह प्रवृत्तः ।**
**ऋतेऽपि त्वां न भविष्यन्ति सर्व्वे येऽवस्थिताः प्रत्यनीकेषु योधाः ॥**

गी०भू०—एवमर्थितो भगवानुवाच–कालोऽस्मीति । प्रवृद्धो व्यापी, "यस्य ब्रह्म च क्षत्रञ्च उभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥" इति श्रुत्या यः कीर्त्त्यते स कालोऽहमित्यर्थः । इह समये लोकान् दुर्य्योधनादीन समाहर्त्तुं ग्रसितुं प्रवृत्तं मां मत्प्रवृत्तिफलञ्च जानीहि–त्वामपि युधिष्ठिरादींश्च ऋते सर्व्वे न भविष्यन्ति न जीविष्यन्ति, यद्वा, ननु रणान्निवृत्ते मयि तेषां कथं क्षयः स्यादिति चेत्तत्राह–ऋतेऽपीति । त्वां योद्धारमृते त्वद्युद्धव्यापारं विनापि सर्व्वे न भविष्यन्ति–मरिष्यन्त्येव कालात्मना मया तेषां आयुर्हरणात् । के ते सर्व्वे इत्याह–प्रत्यनीकेषु परस्परयोर्ये भीष्मादयोऽवस्थिताः, युद्धान्निवृत्तस्य तव तु स्वधर्म्मच्युतिरेव भवेदिति ॥३२॥

**तस्मात्त्वमुत्तिष्ठ यशो लभस्व**
**जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम् ।**
**मयैवैते निहताः पूर्व्वमेव**
**निमित्तमात्रं भव सव्यसाचिन् ॥३३॥**

गी०भू०—यस्मादेवं, तस्मात्त्वमुत्तिष्ठ स्वधर्म्माय युद्धाय यशो लभस्व–सुरदुर्ज्जया भीष्मादयोऽर्ज्जुनेन हेलयैव निर्ज्जिता इति दुर्ल्लभां कीर्त्तिं प्राप्नुहि । पूर्व्वं द्रौपद्यामपराधसमय एव मयैते निहतास्त्वद्यशसे यन्त्रप्रतिमावत् प्रवर्त्तन्ते, तस्मात् त्वं निमित्तमात्रं भव । हे सव्यसाचिन् !–सव्येनापि हस्तेन बाणान् सन्धातुं सन्धातुं शीलमस्येति युद्धनिर्भरे प्राप्ते हस्ताभ्यामिषु-

वर्षिन्नित्यर्थः ॥३३॥

**द्रोणं च भीष्मं च जयद्रथं च कर्णं तथान्यानपि योधवीरान् ।**
**मया हतांस्त्वं जहि मा व्यथिष्ठा युध्यस्व जेतासि रणे सपत्नान् ॥**

गी०भू०—'यद्वा जयेम यदि वा नो जयेयुः' इति स्वविजये संशयं माकार्षीरित्याशयेनाह-द्रोणञ्चेति । मया हतान् हतायुषो द्रोणादींस्त्वं जहि मारय, मा व्यथिष्ठाः कथमेतान् दिव्यास्त्र-सम्पन्नानेकः शक्नोम्यहं विजेतुमिति भयं मा गाः-मृतानां मारणे कः श्रम इत्यर्थः । भयं हित्वा युध्यस्व रणे सपत्नान् रिपून् जेतासि जेष्यसि ॥३४॥

संजय उवाच--

**एतच्छ्रुत्वा वचनं केशवस्य कृताञ्जलिर्वेपमानः किरीटी ।**
**नमस्कृत्वा भूय एवाह कृष्णं सगद्गदं भीतभीतः प्रणम्य॥३५॥**

सारा०ब०--नमस्कृत्वेत्यार्षम् ॥ ३५ ॥

गी०भू०—ततो यदभूत्तत् सञ्जय उवाच-एतदिति । केशवस्यैतत् पद्यत्रयात्मकं बचनं श्रुत्वा किरीटी पार्थः वेपमानोऽत्यद्भुतात्युग्ररूपदर्शनजेन संभ्रमेण सकम्पः, नमस्कृत्वेत्यार्षं-कृष्णं नमस्कृत्य, पुनः प्रणम्य, भीतभीतोऽतिभयाकुलः सन् भूयः पुनरप्याह सगद्गदं गद्गदेन कण्ठकम्पेन सहितं यथा स्यात्तथा ॥३५॥

अर्जुन उवाच--

**स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च ।**
**रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसङ्घाः ।**

सारा०ब०-- भगवद्विग्रहस्यातिप्रसन्नत्वमतिघोरत्वञ्चेदमुन्मु-



खविषयकमिति सहसैव ज्ञात्वा तदेव तत्त्वं व्याचक्षाणः स्तौति-स्थान इत्यव्ययं युक्तमित्यर्थः । हे हृषीकेश, स्वभक्तेन्द्रियाणाञ्च स्वाभिमुख्ये स्वमुख्ये च प्रवर्त्तक, तव प्रकीर्त्त्या त्वन्माहात्म्यसंकीर्त्तनेन जगदिदं प्रहृष्यत्यनुरज्यते अनुरक्तं भवतीति युक्तमेव जगतोऽस्य त्वदौन्मुख्यादिति भावः । तथा रक्षांसि रक्षोऽसुरदानवपिशाचादीनि भीतानि भूत्वा दिशो द्रवन्ति दिशः प्रतिपलायन्त इत्येतदपि स्थाने युक्तमेव तेषां त्वद्वैमुख्यादिति भावः । तथा त्वद्भक्त्या ये सिद्धास्तेषां सङ्घाः सर्व्वे नमस्यन्ति चेत्यपि युक्तमेव तेषां त्वद्भक्तत्वादिति भावः । श्लोकोऽयं रक्षोघ्नमन्त्रत्वेन मन्त्रशास्त्रे प्रसिद्धः ॥ ३६ ॥

गी०भू०—परेशस्य सख्युः कृष्णस्यातिरम्यत्वमत्युग्रत्वञ्च तत्र रङ्गवद्युगपदेव वीक्ष्य तदुभयं स्वसम्मुख-स्वविमुखविषयमिति विद्वानर्ज्जुनस्तदनुरूपं स्तौति-स्थान इत्येकादशभिः । युक्तमित्यर्थकं स्थान इत्येदन्तमव्ययम्, हे हृषीकेशेति-सम्मुखविमुखेन्द्रियाणां साम्मुख्ये वैमुख्ये च प्रवर्त्तकेत्यर्थः । युद्धदर्शनायागतं देवगन्धर्व्वसिद्धविद्याधरप्रमुखं त्वत्सम्मुखं जगत्तव दुष्टसंहर्त्तृत्वरूपया प्रकीर्त्त्या प्रहृष्यत्यनुरज्यते चेति युक्तमेतत् । दुष्टस्वभावानि त्वद्विमुखानि रक्षांसि राक्षसासुरदानवादीनि देवाद्युद्वीतया तत्प्रकीर्त्त्या भीतानि भूत्वा दिशः प्रति द्रवन्ति पलायन्त इति च युक्तम्-तव प्राणिभावानुसारि-रूपप्रकाशित्वादिति भावः । तदित्थं शिष्टाशिष्टानुग्रहकारितां तव वीक्ष्य त्वद्भक्ताः सिद्धसङ्घाः सर्व्वे सनकादयो नमस्यन्ति 'जय जय भगवान्' इत्युदीरयन्तः प्रणमन्तीति च युक्तं तव भक्तमनोहारित्वात् ॥३६॥

**कस्माच्च ते न नमेरन्महात्मन् गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।**
**अनन्त देवेश जगन्निवास त्वमक्षरं सदसत्तत्परं यत् ॥३७॥**

साराº बº--ते कस्मान्न नमेरन, अपि तु नमेरन्नेब,-आत्मनेपदमार्षम्। सत् कार्य्यमसत् कारणञ्च ताभ्यां परं यदक्षरं ब्रह्म तत् त्वम् ॥ ३७ ॥

गीºभूº—अथ भगवतः सर्व्वनमस्यत्वमभिदधत् सर्व्वव्यापित्वात् सर्व्वात्मकतां प्रतिपादयति-कस्माच्चेति चतुर्भिः। हे महात्मन्नुदारमते! हे अनन्त सर्व्वव्यापिन्! हे देवेश सर्व्वदेवनियन्तः! हे जगन्निवास सर्व्वाश्रय! ते सिद्धसङ्घास्ते तुभ्यं कस्माद्धेतोर्न नमेरन्-आत्मनेपदं छान्दसम्, अपि तु प्रणमेयुरेव ते। कीदृशायेत्याह-ब्रह्मणोऽपि गरीयसे गुरुतराय यस्मादादिकर्त्रे तत्त्वसृष्टिकरायेति नमस्यत्वेऽनेके हेतवः सन्तीति समुच्चयालङ्कारः, किञ्च, यदक्षरं प्रकृतिसंसर्गि-जीवात्मवस्तु यच्च सदसत्कार्य्यकारणावस्थं स्थूलसूक्ष्मभूतं प्रकृतितत्त्वं, तत्परं यदिति। तस्मात् प्रकृतिसंसृष्टाज्जीवात्मतत्त्वात् प्रकृतितत्त्वाच्चोक्तरूपात् परमुत्कृष्टं भिन्नं च यन्मुक्तजीवात्मतत्त्वं, तच्च त्वमेव सर्व्वरूप इत्यर्थः ॥३७॥

त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम्।
वेत्तासि वेद्यं च परञ्च धाम त्वया ततं विश्वमनन्तरूपम् ॥३८

साराºबº-निधानं लयस्थानं परं धाम गुणातीतं स्वरूपम्॥३८

गीºभूº—त्वमिति – परं निधानं परमाश्रयो-'निधीयतेऽस्मिन्'इति निरुक्तेः। जगति यो वेत्ता, यच्च वेद्यं, तदुभयं त्वमेव। कुत एवमिति चेत्त्राह,-यत्त्वया विश्वमिदं ततं तद्व्याप्त्वादित्यर्थः, यच्च परं धाम परमव्योमाख्यं प्राप्यस्थानं तदपि त्वमेव पराख्यत्वच्छक्तिवैभवत्वात्तस्य धाम्नः ॥३८॥

वायुर्यमोऽग्निर्वरुणः शशाङ्कः प्रजापतिस्त्वं प्रपितामहश्च।
नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते ॥३९



साराºबº--सर्व्वं स्वकार्य्यं जगदाप्नोषि व्याप्नोषि स्वर्णमिव कटककुण्डलादिकमतस्त्वमेव सर्व्वः ॥ ३९ ॥

गीºभूº—अतः सर्व्वशब्दवाच्यस्त्वमित्याह-वायुरिति। सर्व्वदेवोपलक्षणं वाय्वादिसर्व्वदेवरूपस्त्वं प्रजापतिश्चतुरास्यः पितामहस्त्वं तत्पितृत्वात् प्रपितामहस्त्वं भवसि कङ्कणादिषु कनकस्येव चिदचिच्छक्तिमतस्तव कारणस्य वाय्वादिषु व्याप्तेस्तत्त्वात् सर्व्वरूपस्त्वमतः सर्व्वनमस्योऽसीति मया त्वं नमस्यसे इत्याह-नमो नम इति ॥३९॥

नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व।
अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः ॥
सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति।
अजानता महिमानं तवेदं मया प्रमादात्प्रणयेन वापि ॥४१॥
यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु।
एकोऽथवाप्यच्युत तत्समक्षं तत्क्षामये त्वामहमप्रमेयम् ॥४२

साराºबº--हन्त हन्तैतादृश-महामहैश्वर्य्यमत्त्वय्यहं कृतमहापराधपुञ्जोऽस्मीत्यनुतापमाविष्कुर्व्वन्नाह--सखेतीति। हे कृष्णेति--त्वं वसुदेवनाम्नो नरस्यार्द्धरथत्वेनाप्यप्रसिद्धस्य पुत्रः कृष्ण इति प्रसिद्धः। अहन्तु नरपतेः पाण्डोरतिरथस्य पुत्रोऽर्ज्जुन इति प्रसिद्धः। हे यादवेति-यदुवंश्यस्य तव नास्ति राजत्वम्, मम तु पुरुवंश्यस्यास्त्येव राजत्वम्; हे सखेति-सन्धिरार्षः तदपि त्वया सह मम यत् सख्यं तत्र तव पैत्रिक-प्रभावो न हेतुः नापि कौलिकः, किन्तु तावक एवेत्यभिप्रायतो यत् प्रसभं सतिरस्कारमुक्तं मया तत् क्षामये क्षमयामीत्युत्तरेणान्वयः। तवेदं विश्वरूपात्मकं स्वरूपमेव महिमानं प्रमादाद्वा प्रणयेन

स्नेहेन बा परिहासार्थं बिहारादिष्वसत्कृतोऽसि त्वं सत्यबादी निष्कपटः परमसरल इत्यादिबक्रोक्त्या तिरस्कृतोऽसि, त्वमेकः सखीन् बिनैब रहस्यथबा तत्समक्षं तेषां परिहसतां सखीनां समक्षं पुरतोऽसि यदा स्थितस्तदा जातं तत्सर्व्वमपराधसहस्रं क्षामये----हे प्रभो, क्षमस्वेत्यनुनयामीत्यर्थः ॥ ४१--४२ ॥

गी०भू०—भक्त्यतिशयेन नमस्कारेष्वलं भावमाबदन् बहुकृत्वः प्रणमति–नमः पुरस्तादिति । हे सर्व्व ! पुरस्तात् पृष्ठतः सर्ब्बतश्च स्थिताय ते नमो नमोऽस्तु । अनन्तेति कर्म्मधारयः, बीर्य्यं देह-बलं बिक्रमस्तु धीबलं शस्त्रप्रयोगादि-प्राबीण्यरूपम्, एकं बीर्य्या-धिकं मन्यतैकं शिक्षयाधिकमिति भीमदुर्य्योधनावुद्दिश्योक्तेः । सर्ब्बरूपत्वेहे तुमाह-सर्व्वं समाप्नोषीति । एवमेबोक्तं श्रीवैष्णवे– "योऽयं तवागतो देव समीपं देबतागणः । स त्वमेव जगत्स्रष्टा यतः सर्व्वगतो भवान्" इति ॥४०॥

गी०भू०—एवमर्ज्जुनः सहस्रशीर्षादिलक्षणं स्वसखं कृष्णं बिलोक्य संस्तुत्य प्रणम्य च स्वसख्यस्यैश्वर्य्यज्ञानसम्मिश्रत्वात्ता-दनुरूपमनुनयति–सखेति द्वाभ्याम् । कृष्णो भगबान्मे सखा मित्रमिति मत्वा निश्चित्य तवेदं सहस्रशीर्षत्वादिलक्षणं महिमान-मजानताननुभवता मया प्रमादादनबधानतः प्रणयेन सख्य-प्रेमणा बा यत्त्वां प्रति प्रसभं हठादुक्तं, तदिदानीं क्षामये क्षम-यामि । किं तदिति चेत् तत्राह–हे कृष्णेत्यादि । सखेतीत्यत्र सन्धिश्छान्दसः । एतानि त्रीणि सम्बोधनान्यनादरगर्भाणि–हे कृष्णेत्यत्र श्रीपूर्व्वकत्वाभाबात्, हे यादवेत्यत्र राज्यवंश्य-त्वाभाबावेदनात्, हे सखेत्यत्र सबयस्त्वमात्रसूचनात् । किञ्च,यच्च बिहारादिष्वबहासार्थं परिहासायासत्कृतोऽसि सत्यबाक् सरलो निष्कपटस्त्वमित्येवं व्यञ्जकशब्दैरबज्ञातोऽसि । एकः सखीन् बिना बिजने स्थितस्तत्समक्षं बा तेषां परिहसतां सखीनां पुरतो



बा स्थित इत्यर्थः । तत्सर्ब्बबचनरूपमसत्काररूपं बापराधजातं क्षामये-क्षमस्व प्रभो भगवन्नित्यनुनयामि । हे अच्युतेति सत्य-प्यपराधेऽबिच्युतसखेत्यर्थः । अप्रमेयमतर्क्यप्रभाबम् ॥४१–४२॥

**पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ।**
**न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव॥**

गी०भू०—अप्रमेयतामाह–पितासीति । अस्य लोकस्य पिता पूज्यो गुरुः शास्त्रोपदेष्टा च त्वमसि ; अतः सर्ब्बैः प्रकारैर्गरीयान् गुरुतरस्त्वम् हे अप्रतिम-प्रभाव ! अतोऽस्मिन् लोकत्रये निखि-लेऽपि जगति त्वत्सम एब नास्ति, द्वितीयस्य परेशस्याभाबादेब त्वदधिकोऽन्यः कुतः स्यात् ? श्रुतिश्चैवमाह--"न तत्समश्चाभ्य-धिकश्च दृश्यते" इति ॥४३॥

**तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम् ।**
**पितेव पुत्रस्य सखेब सख्युः प्रियः प्रियायार्हसि देव सोढुम् ॥**

सारा०ब०----कायं प्रणिधाय भूमौ दण्डबन्निपात्य प्रिया-यार्हसीति सन्धिरार्षः ॥ ४४ ॥

गी०भू०—यस्मादेबं तस्मादिति । कायं भूमौ प्रणिधाय, प्रणम्येति साष्टाङ्गं प्रणतिं कृत्वा, हे देव ! ममापराधं सोढुमर्हसि । कः कस्येवेत्याह–पितेवेति । सखेव सख्युरिति तु तदा महैश्वर्य्यं बीक्ष्य स्वस्मिन् दासत्वमननात्, प्रियायार्हसीति बिसर्ग-लोपः सन्धिश्चार्षः ॥४४॥

**अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे ।**
**तदेब मे दर्शय देव रूपं प्रसीद देवेश जगन्निवास ॥४५॥**

सारा०ब०----यद्यप्यदृष्टपूर्व्वमिदं ते बिश्वरूपात्मकं बपुर्दृष्ट्वा

हर्षितोऽस्मि तदप्यस्य घोरत्वाद्भयेन मनः प्रव्यथितमभूत् । तस्मात्तदेव मानुषं रूपं मत्प्राणकोट्यधिकप्रियं माधुर्य्यपारावारं वसुदेवनन्दनाकारं मे दर्शय प्रसीदेत्यलं तवैतादृशैश्वर्य्यस्य दर्शनायेति भावः । देवेशेति त्वं सर्व्वदेवानामीश्वरः सर्व्व-जगन्निवासो भवस्येवेति मया प्रतीतमिति भावः । अत्र विश्व-रूपदर्शनकाले सर्व्वस्वरूपमूलभूतं नराकारं कृष्णवपुस्तत्रैव स्थि-तमपि योगमायाच्छादितत्वादर्ज्जुनेन न दृष्टमिति गम्यते ॥४५॥

गी०भू०—अथ किं वक्षि किं चेच्छसीति चेत्तत्राह-अदृ-ष्टेति । त्वयि कृष्णे सत्त्वेन ज्ञातमपीदमैश्वरं रूपं दृष्ट्वाहं हर्षितो-ऽस्मि मत्सखस्येदमसाधारणं रूपमिति मुदितोऽस्मि मनश्च मम तद्घोरत्वदर्शनजेन भयेन प्रव्यथितं भवति । अत इदं प्रार्थये-तदेवेत्यादि सर्व्वदेवनियन्ता तत्सर्व्वाधारः परेशस्त्वमसीति मया प्रत्यक्षीकृतमतःपरं तदन्तर्भाव्य तदेव मदभीष्टं कृष्णरूपं दर्शय प्रादुर्भावयेत्यर्थः ॥४५॥

**किरीटिनं गदिनं चक्रहस्त-मिच्छामि त्वां द्रष्टुमहं तथैव ।**
**तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्त्ते ॥४६॥**

सारा०व०—किञ्च यदैश्वर्य्यं दर्शयिष्यसि तदा तव नरलील-त्वेन वसुदेवनन्दनाकारेणैव यदस्मदादिभिर्दृष्टं पूर्व्वं तदेवै-श्वर्य्यं परमरसमयमस्मादृशलोकमनोनयनाह्लादकं दर्शय, न पुनर-दृष्टपूर्व्वमिदं देवलीलविश्वरूपादिपुरुषरूपेणाद्यप्रत्यक्षीकृतमैश्वर्य्य-मस्मन्मनोनयनारोचकमित्यभिप्रायेणाह-किरीटिनं दिव्यमहार्घ्य-रत्नकिरीटयुक्तं, तथैवेति यथास्माभिः कदाचिद्दृष्टम् , त्वं जन्म-समये च त्वत्पितृभ्यां यथादृष्टः, हे विश्वमूर्त्ते, हे सम्प्रति सहस्र-बाहो, इदं रूपमुपसंहृत्य तेनैव चतुर्भुजरूपेण भव आविर्भव ॥४६

गी०भू०—तत् कीदृगित्याह-किरीटिनमिति । हे सम्प्रति सहस्र-



बाहो ! हे विश्वमूर्त्ते ! इदं रूपमन्तर्भाव्य दिव्याभिनेतृ-नट-वत्तेनैव चतुर्भुजेन रूपेण विशिष्टः सन् प्रादुर्भव ॥४६॥

श्रीभगवानुवाच—

**मया प्रसन्नेन तवार्ज्जुनेदं रूपं परं दर्शितमात्मयोगात् ।**
**तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्व्वम् ॥४७॥**

सारा०व०—भो अर्ज्जुन, 'द्रष्टुमिच्छामि ते रूपमैश्वरं पुरु-षोत्तम' इति त्वत्प्रार्थनयैवेदं मया मदंशस्य विश्वरूपपुरुषस्य रूपं दर्शितम् । कथमत्र ते मनः प्रव्यथितमभूत ? यतः प्रसीद प्रसीदे-त्युक्त्या तन्मानुषमेव रूपं मे दिदृक्षसे, तस्मात् किमिदमाश्चर्य्य ब्रूष इत्याह-मयेति । प्रसन्नेनैव मया तव तुभ्यमेवेदं रूपं दर्शितम , नान्यस्मै, यतस्त्वत्तोऽन्येन केनापि एतन्न पूर्व्वं दृष्टम् , तदपि त्वमेतन्न स्पृहयसि किमिति भावः ॥४७॥

गी०भू०—एवं प्रार्थितो भगवानुवाच-मयेति । हे अर्ज्जुन ! 'द्रष्टुमिच्छामि ते रूपम्' इत्यादि त्वत्प्रार्थितं प्रसन्नेन मयेदं तेजोमयं परमैश्वरं रूपं वैदूर्य्यवदभिनेतृ-नटवच्च त्वदभीष्टे कृष्णे मयि स्थितमेव तव दर्शितम् ; आत्मयोगान्निजाचिन्त्यशक्त्या मे मम यद्रूपं त्वदन्येन जनेन पूर्व्वं न दृष्टम् । तत्प्रसङ्गादिदानीं त्वन्यैरपि देवादिभिर्दृष्टं भक्तिदृश्यं मम तत्स्वरूपं भक्तं त्वां प्रति प्रदर्शयता मया त्वद्दृष्टस्य बहुसाक्षिकत्वाय देवादिभ्यो-ऽपि भक्तिमद्भ्यः प्रदर्शितम् , यत्तु गजसाह्वये दुर्य्योधनादिभि-रपि विश्वरूपं दृष्टं, तन्नेदृग्विधमिति त्वदन्येन न दृष्टपूर्व्वमित्यु-क्तम् ॥४७॥

**न वेदयज्ञाध्ययनैर्न दानै-र्न च क्रियाभिर्न तपोभिरुग्रैः ॥**
**एवंरूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ॥४८॥**

साराःब॰—तुभ्यं दर्शितमिदं रूपन्तु वेदादिसाधनैरपि दुर्लभमित्याह–न वेदेति । त्वत्तोऽन्येन न केनाप्यहमेवंरूपः द्रष्टुं शक्यः ; शक्य अहमिति–यद्वयलोपावार्षौ । तस्मादलभ्यलाभमात्मनो मत्वा त्वमस्मिन्नेवेश्वरे सर्व्वदुर्ल्लभे रूपे मनो निष्ठां कुरु ; एतद्रूपं दृष्ट्वाप्यलं ते पुनर्मे मानुषरूपेण दिदृक्षितेनेति भावः ॥४८॥

गी॰भू॰—अथ सहस्रशीर्षादिलक्षणस्यैश्वररूपस्य पुमर्थतामाह– न वेदेति । वेदानामध्ययनैरक्षरग्रहणैः, यज्ञानामध्ययनैर्मीमांसा-कल्पसूत्रादिद्वारा तदर्थविमर्शरूपैः, दानैः संभोग्यानां सत्पात्रेभ्योऽर्पणैः, क्रियाभिरग्निहोत्रादिकर्म्मभिः, तपोभिः कृच्छ्रादिभिरुग्रैर्देहशोषकत्वेन दुष्करैः । एभिः केवलैर्व्वेदाध्ययनादिभिर्भक्तियुक्तात्त्वत्तोऽन्येन भक्तिरिक्तेन केनापि पुंसा एवंरूपोऽहं द्रष्टुं न शक्यो–भक्तिं बिना भूतानि बेदाध्ययनादीनि मद्दर्शनसाधनानि न भवन्तीति, यदुक्तं–"धर्म्मः सत्यादयोपेतो बिद्या बा तपसान्विता । मद्भक्त्यापेतमात्मानं न सम्यक् प्रपुनाति हि ॥" इति त्वया तु भक्तिमता दृष्ट एवाहमन्यैश्च भक्तिमद्भिर्देवादिभिः । शक्योऽहमिति बक्तव्ये बिसर्गलोपश्छान्दसः । नकाराभ्यासो निषेधदार्ढ्यार्थः । नृलोक इत्युक्तेस्तल्लोके तद्भक्ता देवा बहबस्तद्द्रष्टुं शक्नुबन्तीत्युक्तम ॥४८॥

**मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।**
**व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य ॥४९॥**

साराःब॰—भोः परमेश्वर, मां त्वं किं न गृह्णासि ? यदनिच्छतेऽपि मह्यं पुनरिदमेव बलाद्दित्ससि ; दृष्ट्वेदं तवैश्वर्य्यं मम गात्राणि व्यथन्ते, मनो मे व्याकुलीभवति, मुहुरहं मूर्च्छामि, तबास्मै परमैश्वर्य्याय दूरत एव मम नमो नमोऽस्तु, न कदाप्यहमेवं द्रष्टुं प्रार्थयिष्ये, क्षमस्व क्षमस्व ; तदेव मानुषाकारं बपुरपूर्व्वमाधुर्य्यधुर्य्यस्मितहसितसुधासारबर्षिमुखचन्द्रं मे दर्शय दर्शयेति व्याकुलमर्ज्जुनं प्रति साश्वासमाह–मा त इति ॥४९॥



गी॰भू॰—यच्च तस्मिन्नेव मद्रूपे संहर्त्तृत्वं मया प्रदर्शितं तत् खलु द्रौपदीप्रधर्षणं बीक्ष्यापि तुष्णीं स्थिता भीष्मादयः सर्व्वे तत्प्रधर्षणाकुपितेन मयैब निहन्तव्या न तु तन्निहननभारस्तवेति बोधयितुमतस्तेन त्वं व्यथितो माभूरित्याह,–मा ते व्यथेति । तदेव चतुर्भुजं प्रार्थितरूपम् ॥ ४९ ॥

संजय उवाच –

**इत्यर्जुनं बासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः ।**
**आश्वासयामास च भीतमेनं भूत्वा पुनः सौम्यवपुर्महात्मा ॥**

साराःब॰—यथा स्वांशस्य महोग्ररूपं दर्शयामास, तथा महामधुरं स्वकं रूपं चतुर्भुजं किरीटगदाचक्रादियुक्तं तत्प्रार्थितं मधुरैश्वर्य्यमयं भूयो दर्शयामास । ततः पुनः स महात्मा सौम्यबपुः कटककुण्डलोष्णीषपीताम्बरधरो द्विभुजो भूत्वा भीतमेनमाश्वासयामास ॥५०॥

गी॰भू॰—ततो यद्भूत्तत् सञ्जय उबाच—इत्यर्ज्जुनमिति । बासुदेबोऽर्ज्जुनं प्रति पूर्व्वोक्तमुक्त्वा यथा सङ्कल्पेनैव सहस्रशिरस्कं रूपं दर्शितबान् तथैब स्वकं नीलोत्पलश्यामलत्वादिगुणकं देबकीपुत्रलक्षणं चतुर्भुजं रूपं दर्शयामास एवं सौम्यबपुः सुन्दरबिग्रहो भूत्वा भीतमेनमर्ज्जुनं पुनराश्वासयामास । महात्मा उदारमना ॥ ५० ॥

अर्जुन उवाच –

**दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।**
**इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥५१॥**

गी०भू०—ततो निर्व्यथः प्रसन्नमनाः सन्नर्ज्जुन उवाच—दृष्ट्वेदमिति। हे जनार्द्दन तवेदं सौम्यं मनोज्ञं चतुर्भुजं रूपं दृष्ट्वाहमिदानीं सचेताः प्रसन्नचित्ताः प्रकृतिं व्यथाद्यभावेन स्वास्थ्यञ्च गतः संवृत्तो जातोऽस्मि। कीदृशं रूपमित्याह-मानुषमिति। चैतन्यानन्दविग्रहः कृष्णो वक्ष्यमाणश्रुतिस्मृतिभ्यः, स हि यदुषु; पाण्डवेषु च द्विभुजः कदाचिच्चतुर्भुजश्च क्रीड़ति, तदुभयरूपस्यास्य मानुषवत् संस्थानाच्चेष्टिताच्च,–मानुषभावेनैव व्यपदेश इति प्रागभाषि॥ ५१॥

सारा०ब०—ततश्च महामधुरमूर्त्तिं कृष्णमालोक्यानन्दसिन्धुस्नातः सन्नाह–इदानीमेवाहं सचेताः संवृत्तः सचेता अभूवं, प्रकृतिं गतः स्वास्थ्यं प्राप्तोऽस्मि॥५१॥

श्रीभगवानुवाच—

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः॥५२॥

सारा०ब०—दर्शितस्य स्वरूपस्य माहात्म्यमाह–सुदुर्द्दर्शमिति त्रिभिः। देवता अप्यस्य दर्शनाकाङ्क्षिणः एव, न तु दर्शनं लभन्ते। त्वन्तु नैवैतमपि स्पृहयसि मन्मूलस्वरूपनराकारमहामाधुर्य्यनित्यास्वादिने त्वच्चक्षुषे कथमेतद्रोचताम्? अतएव मया "दिव्यं ददामि ते चक्षुः" इति दिव्यं चक्षुर्दत्तम्, किन्तु दिव्यचक्षुरिव दिव्यं मनो न दत्तम्; अतएव दिव्यचक्षुषापि त्वया न सम्यक्तया रोचितं मन्मानुषरूपमहामाधुर्य्यैकग्राहिमनस्कत्वात्, यदि दिव्यं मनोऽपि तुभ्यमदास्यं, तदा देवलोक इव भवानप्येतद्विश्वरूपपुरुषस्वरूपमरोचयिष्यदेवेति भावः॥५२॥

गी०भू०—मया प्रदर्शितं 'न वेदयज्ञाध्ययनैः' इत्यादिना श्लाघितञ्च सहस्रशिरस्कं मद्रूपं श्रद्दधानो मत्प्रियसखोऽर्ज्जुने



मनुष्यभावभाविते श्रीकृष्णे मयि कदाचिद्विश्रम्भभावो माभूदिति भावेन स्वक-रूपस्य परमपुरुषार्थतामुपदिशति,–सुदुर्द्दर्शमिति। सहस्रशिरस्कं मद्रूपं दुर्द्दर्शमेव; इदञ्च मम कृष्णरूपं सुदुर्द्दर्शम्,–'नाहं प्रकाशः सर्व्वस्य' इत्युक्तेः। यत्त्वं सुचिराद्द्रष्टवानसि कथमेवं प्रत्येमीति चेत्तत्राह,–देवा अप्यस्येति। एतच्च दशमादौ गर्भस्तुत्यादिना प्रसिद्धमेव॥ ५२॥

नाहं वेदैर्न तपसा न दानेन न चेज्यया।
शक्य एवंविधो द्रष्टुं दृष्टवानसि यन्मम॥५३॥

सारा०ब०—किञ्च युष्मदस्पृहणीयमप्येतत् स्वरूपमन्ये पुरुषार्थसारत्वेन ये स्पृहयन्ति, तैर्व्वेदाध्ययनादिभिरपि साधनैरेतज्ज्ञातुं द्रष्टुञ्चाशक्यमेवेति प्रतीहीत्याह–नाहमिति॥५३॥

गी०भू०—सुदुर्ल्लभतामाह–नाहमिति। एवम्बिधो देवकीसूनुश्चतुर्भुजस्त्वत्सखोऽहं वेदादिभिरपि साधनैः केनापि पुंसा भक्तिशून्येन द्रष्टुं न शक्यो यथा त्वं मां दृष्टवानसि॥ ५३॥

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप॥५४॥

सारा०ब०—तर्हि केन साधनेनैतत् प्राप्यते? इत्यत आह–भक्त्या त्विति। शक्य अहमिति–यद्वयंलोपावार्षौ। यदि निर्व्वाणमोक्षेच्छा भवेत्, तदा तत्त्वेन ब्रह्मस्वरूपत्वेन प्रवेष्टुमपि अनन्यया भक्त्यैव शक्यो नान्यथा। ज्ञानिनां गुणीभूतापि भक्तिरन्तिमसमये ज्ञानसंन्यासानन्तरमुर्व्वरिता अल्पीयस्यनन्यैव भवेत्तयैव तेषां सायुज्यं भवेदिति, "ततो मां तत्त्वतो ज्ञात्वा बिशते तदनन्तरम्" इत्यत्र प्रतिपादयिष्यामः॥५४॥

सारा०ब०—अभिमतां परभक्त्यैकदृश्यतां स्फुटयन्नाह—

भक्त्येति। एवम्बिधो देवकीसूनुश्चतुर्भुजोऽहमनन्यया मदेकान्तया भक्त्या तु वेदादिभिस्तत्त्वतो ज्ञातुं शक्यः, द्रष्टुं प्रत्यक्षं कर्त्तुं तत्त्वतः प्रवेष्टुं संयोक्तुं च शक्यः। पुरं प्रविशतीत्यत्र पुरसंयोग एब प्रतीयते। तत्र वेदो गोपालोपनिषत्, तपो मज्जन्माष्टम्येकादश्याद्युपोषणं, दानं मद्भक्तसम्प्रदानकं स्वभोग्यानामर्पणम्, इज्या मन्मूर्त्तिपूजा। श्रुतिश्चैबमाह,-"यस्य देवे परा भक्तिः" इत्याद्या। तु-शब्दोऽत्र भिन्नोपक्रमार्थः। न च सुदुर्द्दर्शम्' इत्यादित्रयं सहस्रशीर्षरूपपरमिति बाच्यम्,-'इत्यर्ज्जुनम्' इत्यादिद्वयस्य नराकृतिचतुर्भुज-स्वरूपपरस्याव्यबहितपूर्व्वत्वात, तद्द्वयेन सहस्रशीर्षरूपस्य व्यबधानाच्च; तत्र यस्य तदेकबाक्यतायां "नाहं वेदैः" इत्यादेः पौनरुक्त्यापत्तेश्च। यत्तु दिव्यदृष्टिदानेन लिङ्गेन नराकाराच्चतुर्भुजात् सहस्रशीर्ष्णो देबाकारस्योत्कर्षमाह तदबिचारिताभिधानमेब-देबाकारस्य तस्य चतुर्भुजनराकाराधीनत्वात्। तत्त्वञ्च तस्य युक्तमेव-"यः कारणार्णबजले भजति स्म योगनिद्राम्" इत्यादि स्मरणात। इदं नराकृतिकृष्णरूपं सच्चिदानन्दं सर्व्वबेदान्तवेद्यं बिभुं सर्व्वाबतारीति प्रत्येतव्यं,-'सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे। नमो बेदान्तबेद्याय गुरुबे बुद्धिसाक्षिणे॥" "कृष्णो वै परमं दैबतम्" "एको बशी सर्व्बगः कृष्ण ईड्यः" "एकोऽपि सन् बहुधा योऽबभाति" इत्यादि श्रबणात "ईश्वरः परमः—कृष्णः सच्चिदानन्दबिग्रहः। अनादिरादिर्गोबिन्दः सर्व्वकारणकारणम्॥" "यत्राबतीर्णं कृष्णाख्यं परं ब्रह्म नराकृति" "एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्" इत्यादि स्मरणाच्च। अत्रापि स्वयमेबोक्तं,-"मत्तः परतरं नान्यत्' इति, "अहमादिर्हि देबानाम्' इत्यादि च अर्ज्जुनेन च,-'परं ब्रह्म परं धाम"इत्यादि। तस्मादतिप्रभाबेण संक्रान्ते सहस्रशीर्ष्णि रूपे तेन संक्रान्तैव



दृष्टिर्ग्राहिणी युक्ता, न त्वतिसौन्दर्य्यलाबण्यनिधि-नराकृति-कृष्णरूपानुभाबिनी दृष्टिस्तत्र ग्राहिणीति भावेन कृष्णरूपे सहस्रशीर्षत्वबदर्ज्जुनचक्षुषि तादृग्रूपग्राहि तेजस्त्वमेव संक्रमितमिति मन्तव्यम्, न तु युक्त्याभासलाभेन हैतुकत्वं स्वीकार्य्यम्, न चार्ज्जुनोऽप्यन्यमनुष्यबच्चर्म्मचक्षुष्कः,-तस्य भारतादिषु नरभगवदबतारत्वेनासकृदुक्तेः। कर्म्मोद्भूतया बिद्यया सनिष्ठैः सहस्रशिरस्कं रूपं लभ्यमिति दुर्द्दर्शं तत् नराकृतिकृष्णरूपं त्वनन्यया भक्त्यैबेति सुदुर्द्दर्शं तदुक्तम्॥ ५४॥

मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥५५॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्व्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मबिद्यायां योगशास्त्रे श्रीकृष्णार्ज्जुनसंबादे बिश्वरूपदर्शन-योगो नामैकादशोऽध्यायः।

-❀:०:❀-

सारा०ब०अथभक्तिप्रकरणोपसंहारार्थंस प्तमाध्यायादिषु ये ये भक्ता उक्तास्तेषां सामान्यलक्षणमाह-मत्कर्म्मकृदिति। सङ्गबर्ज्जितः सङ्गरहितः॥५५॥

कृष्णस्यैव महैश्वर्य्यं ममैबास्मिन् रणे जयः।
इत्यर्ज्जुनो निश्चिकायेत्यध्यायार्थो निरूपितः॥
इति सारार्थबर्षिण्यां हर्षिण्यां भक्तचेतसाम्।
गीतास्वेकादशोऽध्यायः सङ्गतः सङ्गतः सताम्॥

गी०भू०—अथ स्वप्राप्तिकरीमनन्यां भक्तिमुपदिशन्नुपसंहरति,-मदिति। मत्सम्बन्धिनी मन्मन्दिरनिर्म्माण-तद्बिमार्ज्जन-मत्पुष्पबाटीतुलसीकाननसंस्कार-तत्सेचनादीनि कर्म्मा-

दीनि करोतीति मत्कर्म्मकृत्, मत्परमो मामेव न तु स्वर्गादिकं स्वपुमर्थं जानन्, मद्भक्तो मच्छ्रवणादि-नवविधभक्तिरसानिरतः सङ्गवर्जितः मद्विमुखसंसर्गमसहमानः सर्व्वभूतेषु निर्व्वैरः-तेष्वपि मद्विमुखेषु प्रतिकूलेषु सत्सु वैरशून्यः,-स्वक्लेशस्य स्वपूर्व्वकर्म्म-निमित्तकत्वविमर्शेन तेषु वैरनिमित्ताभावात्। एवम्भूतो यः मां नराकारं कृष्णमेति लभते, नान्यः ॥ ५५ ॥

पूर्णः कृष्णोऽवतारित्वात्तद्भक्तानां जयो रणे।
भारते पाण्डुपुत्राणामित्येकादशनिर्णयः ॥

इति श्रीमद्भगवद्गीतोपनिषद्भाष्ये एकादशोऽध्यायः।



# द्वादशोऽध्यायः



अर्जुन उवाच —

**एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते।**
**ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥१॥**

सारा०ब०—द्वादशे सर्व्वभक्तानां ज्ञानिभ्यः श्रैष्ठ्यमुच्यते।
भक्तेष्वपि प्रशस्यन्ते येऽद्वेषादिगुणान्विताः ॥

सारा०ब०—भक्तिप्रकरणस्योपक्रमे 'योगिनामपि सर्व्वेषां मद्गतेनान्तरात्मना। श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥' इति भक्तेः सर्व्वोत्कर्षो यथा श्रुतः, तथैवोपसंहारेऽपि तस्या एवं सर्व्वोत्कर्षं श्रोतुकामः पृच्छति। एवं सततयुक्ता 'मत्कर्म्मकृन्मत्परमः' इति त्वदुक्तलक्षणा भक्तास्त्वां श्यामसुन्दराकारं ये पर्य्युपासते, ये चाव्यक्तं निर्विशेषमक्षरम्—"एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वम्" इत्यादि



श्रुत्युक्तं ब्रह्म उपासते, तेषामुभयेषां योगविदां मध्ये केऽतिशयेन योगविदश्च त्वत्प्राप्तौ श्रेष्ठमुपायं जानन्ति, न लभन्ते वा। ते योगवित्तरा इति वक्तव्ये योगवित्तमा इत्युक्तिर्योगवित्तराणामपि बहूनां मध्ये के योगवित्तमा इत्यर्थं बोधयति ॥१॥

गी०भू०—उपायेषु समस्तेषु शुद्धा भक्तिर्महाबला।
प्रापयेत्त्वरया यन्मामित्याह द्वादशे हरिः ॥

जीवात्मानं यथावज्ज्ञात्वा विज्ञाय च तदंशी हरिर्ध्येय इति 'अविनाशि तु तद्विद्धि' इत्यादिभिर्द्वितीयादिष्वेकः पन्था वर्णितः। जीवात्मानं हरेरंशं ज्ञात्वैव तदंशी हरिस्तच्छ्रवणादि-भक्तिभिर्ध्येय इति 'मय्यासक्तमनाः पार्थ' इत्यादिभिः सप्तमादिषु द्वितीय पन्थाः प्रदर्शितः। तेष्वेव प्रयाणकाले इत्यादिना योगोपसृष्टा, 'ज्ञानयज्ञेन चाप्यन्ये' इत्यनेन ज्ञानोपसृष्टा च भक्तिरुक्ता। भक्तिषट्कात् प्राक् षष्ठान्ते केवलां भक्तिमुपदेक्ष्यता योगिनामपि सर्व्वेषाम्' इत्यादिपद्येन स्वैकान्तिनां युक्ततमता चाभिहिता। तत्रार्ज्जुनः पृच्छति,-एवमिति। एवं मय्यासक्त-मनाः पार्थ' इत्यादि त्वदुक्तविधया सततयुक्ता ये त्वां श्यामसुन्दरं कृष्णं परितः कायादिव्यापारैरुपासते, ये चाक्षरं जीवस्वरूपं चक्षुरादिभिरव्यक्तं पर्य्युपासते धारणाध्यानसमाधिभिः साक्षात्कर्त्तुमीहन्ते परमात्मकामा स्तेषामुभयेषां मध्ये योगवित्तमाः शीघ्रोपायिनः के भवन्ति? अयं भावः,-स्वानुभवपूर्व्वकस्य हरिध्यानस्य बन्धमूलत्वात्तेन निर्व्विघ्ना तत्प्राप्तिरित्येके। नीरूपस्यातिसूक्ष्मस्य जीवात्मनो दुर्ध्यानत्वात् किं तद्ध्यानेन? किन्तु हरिभक्तिरेव सर्व्वविघ्नविमर्द्दिनी हरिप्रापणीत्येके। तस्यामेव निरतास्तेषामुभयेषामुपायेषु कः श्रेयानुपाय इति त्वं भणेति ॥ १ ॥

श्रीभगवानुवाच—

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥२॥

सारा०ब०—तत्र मद्भक्ता श्रेष्ठा इत्याह-मयि श्यामसुन्दराकारे मन आवेश्याविष्टं कृत्वा नित्ययुक्ता मन्नित्ययोगकाङ्क्षिणः परया गुणातीतया श्रद्धया, यदुक्तं-"सात्त्विक्याध्यात्मिकी श्रद्धा कर्म्मश्रद्धा तु राजसी। तामस्यधर्म्मे या श्रद्धा मत्सेवायान्तु निर्गुणा ॥" इति। ते मे मदीया अनन्यभक्ता युक्ततमा योगवित्तमा इत्यर्थः। तेनानन्यभक्तेभ्यो न्यूना अन्ये ज्ञानकर्म्मादिमिश्रभक्तिमन्तो योगवित्तरा इत्यर्थोऽभिव्यञ्जितो भवति। ततश्च ज्ञानाद्भक्तिः श्रेष्ठा भक्तावप्यनन्यभक्तिः श्रेष्ठेत्युपपादितम् ॥२॥

गी०भू०—एवं पृष्टो भगवानुवाच-मयीति। ये भक्ता मयि नीलोत्पलश्यामलत्वादिधर्म्मिणि स्वयं भगवति देवकीसूनौ मन आवेश्य निरतं कृत्वा परया दृढ़या श्रद्धयोपेताः सन्तो मामुक्तलक्षणमुपासते-श्रवणादिलक्षणामुपासनां मम कुर्व्वन्ति, नित्ययुक्ता नित्यं मद्योगमिच्छन्तस्ते मम मतेन युक्ततमा मताः-शीघ्रमत्प्रापकोपायिनस्ते ॥२॥

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्य्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥३॥
संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्व्वभूतहिते रताः ॥४॥

सारा०व०—मदीय-निर्व्विशेषब्रह्मस्वरूपोपासकास्तु दुःखित्वात्ततो न्यूना इत्याह-ये त्विति द्वाभ्याम। अक्षरं ब्रह्म, अनिर्द्देश्यं शब्देन व्यपदेष्टुमशक्यम्, यतोऽव्यक्तं रूपादिहीनम्, सर्व्वत्रगं सर्व्वदेशव्याप्यचिन्त्यं तर्कागम्यम, कूटस्थं सर्व्वकालव्यापि-"एकरूपतया तु यः कालव्यापी स कूटस्थः" इत्यमरः। अचलं वृद्ध्यादिरहितम् ध्रुवं नित्यम। मामेवेत्यक्षरस्य तस्य मत्तो भेदाभावात् ॥३-४॥

गी०भू--ये तु स्वसाक्षात्कृतिपूर्व्विकां मदुपासनां न कुर्व्वन्ति, तेषामपि मत्प्राप्तिः स्यादेव किन्त्वतिक्लेशेनातिचिरेणैवातस्तेभ्योऽपकृष्टास्त इत्याह-ये त्विति त्रिभिः। ये त्वक्षरस्वात्मचैतन्यमेव पूर्व्वमुपासते, तेषामधिकतरः क्लेश इति सम्बन्धः। अक्षरं विशिनष्टि-अनिर्द्देश्यं देहाद्भिन्नत्वेन देहाभिधायिभिर्देवमानवादिशब्दैर्निर्द्देष्टुमशक्यम, अव्यक्तञ्चक्षुराद्यगोचरं प्रत्यक्, सर्व्वत्रगं देहेन्द्रियप्राणव्यापि, अचिन्त्यं तर्कागम्यं श्रुतिमात्रवेद्यम-"ज्ञानस्वरूपमेव ज्ञातृस्वरूपम" इति श्रुत्यैव प्रत्येतव्यम, कूटस्थं सर्व्वदाणुस्वरूपतैकरूपम्, अचलं ज्ञानत्वादिव ज्ञातृत्वादपि चलनरहितम्, ध्रुवं परमात्मैकशेषतायां सर्व्वदा स्थिरम्। अक्षरोपासने विधिमाह-संनियम्येति। करणग्रामं श्रोत्रादीन्द्रियवृन्दं संनियम्य शब्दादिसञ्चारेभ्यस्तद्व्यापारेभ्यः प्रत्याहृत्य सर्व्वत्र सुहृन्मित्रार्य्युदासीनादिषु समबुद्धयस्तुल्यदृष्टयः, यद्वा, सर्व्वेषु चेतनाचेतनेषु वस्तुषु स्थिते समे ब्रह्मणि बुद्धिर्येषां ते ब्रह्माधिष्ठानतया तेषु द्वेषशून्यास्तत एव सर्व्वेषां भूतानां हिते उपकारे रताः सर्व्वेषां शं भूयादिति यथायथं यतमानाः एवं स्वात्मसाक्षात्कृतिपूर्व्विकायां मद्भक्तौ मदर्पितकर्म्मलक्षणायां ये प्रवर्त्तन्ते, तेऽपि मामेव पारमैश्वर्य्यप्रधानं प्राप्नुवन्तीति नास्ति संशयः ॥३-४

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥५॥

सारा०ब०—तर्हि केनांशेन तेषामपकर्षस्तत्राह-क्लेश इति।

न केनापि व्यज्यत इत्यव्यक्तं ब्रह्म तत्रैबासक्तचेतसां तदेबानुबुभूषूणां तेषां तत्प्राप्तौ क्लेशोऽधिकतरः। हि यस्मादव्यक्ता गतिः केनापि प्रकारेण व्यक्तीभबति सा गतिर्देहबद्भिर्जीवैर्दुःखं यथा भबत्येवमवाप्यते। तथा हीन्द्रियाणां शब्दादिज्ञानबिशेष एब शक्तिः, न तु बिशेषतरज्ञान इति। अत इन्द्रियनिरोधस्तेषां निर्बिशेषज्ञानमिच्छतामबश्य-कर्त्तव्य एव। इन्द्रियाणां निरोधस्तु स्रोतस्वतीनामिव स्रोतो निरोधो दुष्कर एब, यदुक्तं सनतकुमारेण—"यत्पादपङ्कजपलाशबिलासभक्त्या, कर्म्माशयं ग्रथितमुद्ग्रथयन्ति सन्तः। तद्बन्न रिक्तमतयो यतयो निरुद्ध-स्रोतोगणास्तमरणं भज बासुदेवम्॥" "क्लेशो महानिह भवार्णवमप्लबेशां, षड्बर्गनक्रमसुखेन तितीरषन्ति। तत् त्वं हरेर्भगवतो भजनीयमङ्घ्रिं कृत्वोडुपं व्यसनमुत्तार दुस्तरार्णम्॥" इति! तावता क्लेशेनापि सा गतिर्यद्यबाप्यते, तदपि भक्तिमिश्रेणैव। भगवति भक्तिं बिना केबलब्रह्मोपासकानान्तु केबलक्लेश एब लाभो, न तु ब्रह्मप्राप्तिः, यदुक्तं ब्रह्मणा—"तेषामसौ क्लेशल एब शिष्यते, नान्यद्यथा स्थूलतुषावघातिनाम्" इति॥५॥

गी०भू०—ननु तेऽपि चेत्त्वामेव प्राप्नुयुर्स्तर्हि पूर्व्वेषां युक्ततमत्वं किं निबन्धनम्? तत्राह—क्लेशोऽधिकेति। अव्यक्तासक्तचेतसामतिसूक्ष्मनीरूपजीबात्मसमाधिनिरतमनसां तेषामधिकतरः क्लेशः। यद्यपि पूर्व्वेषामपि तत्तान्मद्भक्त्यङ्गसमाचारो मदन्यबिषयेभ्यः करणानां प्रत्याहारश्च क्लेशोऽस्त्येब, तथापि तत्रानन्दमूर्त्तेर्मम स्फुरणान्न क्लेशतया बिभाति। कुतोऽधिकतरत्वं सुदूरापास्तम्? हि यस्मादव्यक्ता गतिरव्यक्ताक्षरबिषया मनोवृत्तिर्देहबद्भिर्देहाभिमानिभिर्जनैर्दुःखं यथा स्यात्तथावाप्यते—देहबन्तः खलु स्थूलदेहमेव सुचिरादात्मत्वेनानुशीलितबन्तः कथमणुचैतन्यं सुचिरोज्झितबिमर्शमात्मत्वेनानुशीलितुं प्रभबेयुरिति



भावः। यत्त्वत्र व्याचक्षते—सगुणं निर्गुणञ्चेति द्विरूपं ब्रह्म—तत्र सगुणोपासनमाकारबद्विषयत्वात् सुकरमप्रमादञ्च, निर्गुणोपासनं तु तत्त्वाभाबाद्दुःखकरं सप्रमादञ्च, तच्च निर्गुणं ब्रह्माक्षरशब्देनोच्यते। नैर्गुण्यप्रतिपत्तये सप्त बिशेषणानि—अनिर्द्देश्यं वेदागोचरं, यतोऽव्यक्तं जात्यादिशून्यं, सर्व्वत्रगं व्यापि, अचिन्त्यं मनसाप्यगम्यम्, श्रुतिश्च—"यतो बाचो निबर्त्तन्ते अप्राप्य मनसा सह" इत्याद्या, कूटस्थं मिथ्याभूतमपि सत्यबत् प्रतीतं जगत् कूटमुच्यते—यथा कूटकार्षापणादि, तस्मिन्नाध्यासिकसम्बन्धेनाधिष्ठानतया स्थितम्, अचरमबिकारमतो ध्रुवं नित्यमिति। तद्बिदां खलु गुरूपसत्तिपूर्व्वकोपनिषद्बिचारतदर्थमनन-तन्निदिध्यासनैर्महान् क्लेशः। पूर्व्वेषां तु तैर्बिनैव गुरूक्तभगबत्प्रसादाबिर्भूतेनाज्ञानतत्कार्य्यबिमर्द्दिना बिज्ञानेन भगबत् स्वरूपभूतनिर्गुणाक्षरात्मैक्यलक्षणा मुक्तिरिति फलैक्येऽपि क्लेशाक्लेशाभ्यामपकर्षोत्कर्षाबिति। तदिदं मन्दं—"गतिसामान्यात्" इति सूत्रे ब्रह्मणो द्वैरूप्यनिरासात्, "यया तदक्षरमधिगम्यते" इति तस्य वेदवेद्यत्वश्रबणात्, "यतो बाचः" इत्यादेः कार्त्स्न्यागोचरत्वार्थत्वात्, प्रबृत्तिनिमित्ताभावेन निर्गुणस्याप्रमाणत्वात्तौच्छ्याच्च लक्ष्यत्वं तु न, सर्व्वशब्दबाच्यत्वस्वीकारात्, सदैकाबस्थस्य बस्तुनः कूटस्थत्वेनाभिधानान्न च जगत् कूटम्, "कबिर्मनाषी परिभूः स्वयम्भुर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः" इत्यादौ तस्य सत्यत्वश्रबणात्, यशोदास्तनन्धयबिभुचिद्बिग्रहस्य परब्रह्मत्वश्रबणेन तदन्तस्थनिर्गुणाक्षरकल्पनस्य श्रद्धा-जाड्यकृतत्वात्॥५॥

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः।
अनन्येनैव योगेन मां ध्यायन्त उपासते॥६॥

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि नचिरात्पार्थ मय्यावेशितचेतसाम् ॥७॥

सारा०ब०—भक्तानान्तु ज्ञानं बिनैब केबलया भक्त्यैव सुखेन संसारान्मुक्तिरित्याह-ये त्विति । मयि मत्प्राप्त्यर्थं संन्यस्य त्यक्त्वा सन्न्यास-शब्दस्य त्यागार्थत्वात्, अनन्येनैव ज्ञान-कर्म्म-तपस्यादिरहितेनैव योगेन भक्तियोगेन। यदुक्तं-"यत् कर्म्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्" इत्यनन्तरं "सर्व्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा । स्वर्गापबर्गं मद्धाम कथञ्चिद्यदि बाञ्छति ॥" इति, मोक्षधर्म्मे नारायणीये च-"यो वै साधन-सम्पत्तिः पुरुषार्थचतुष्टये। तया बिना तदाप्नोति नरो नारायणाश्रयः ॥" इति। ननु तदपि तेषां संसारतरणे कः प्रकार इति चेत्? सत्यम्, तेषां संसारतरणप्रकारे जिज्ञासा नैव जायते, यतस्तत्प्रकारं बिनैवाहमेव तांस्तारयामीत्याह-तेषामिति । तेन भगबतो भक्तेष्वेव बात्सल्यं न तु ज्ञानिष्विति ध्वनिः ॥६-७॥

गी०भू०—तथात्मयाथात्म्यं श्रुत्वैवात्मांशिनो मम केबलां भक्तिं ये कुर्व्वन्ति, न त्वात्मसाक्षात्कृतये प्रयतन्ते, तेषां तु केवलया मद्भक्त्यैव मत्प्राप्तिरचिरेणैव स्यादित्याह-ये त्विति द्वाभ्याम्। ये मदेकान्तिनो मयि मत्प्राप्त्यर्थं सर्व्वाणि स्वबिहितान्यपि कर्म्माणि संन्यस्य भक्तिबिक्षेपकत्वबुद्ध्या परित्यज्य मत्परा मदेकपुरुषार्थाः सन्तोऽनन्येन केवलेन मच्छ्रवणादिलक्षणेन योगेनोपायेन मां कृष्णं उपासते-तल्लक्षणां मदुपासनां कुर्व्वन्ति ध्यायन्तः श्रबणादिकालेऽपि मन्निबिष्टमनसः, तेषां मय्यावेशितचेतसां मदेकानुरक्तमनसां भक्तानामहमेव मृत्युयुक्तात् संसारात् सागरबद्दुस्तरात् समुद्धर्त्ता भबामि, न चिरात् त्वरया तत्प्राप्तिबिलम्बासहमानस्तानहं गरुड़स्कन्धमारोप्य स्वधाम प्रापयामीत्यचिरादि-



निरपेक्षा तेषां मद्धामप्राप्तिः-"नयामि परमं स्थानमर्चिरादिगतिं विना। गरुड़स्कन्धमारोप्य यथेच्छमनिबारितः ॥" इति बाराहबचनात्, कर्म्मादिनिरपेक्षापि भक्तिरभीष्टसाधिका-"या वै साधनसम्पत्तिः पुरुषार्थचतुष्टये। तया बिना तदाप्नोति नरो नारायणाश्रयः" ॥ इति नारायणीयात्, "सर्व्वधर्म्मोज्झिता विष्णोर्नाम-मात्रैकजल्पकाः । सुखेन यां गतिं यान्ति न तां सर्व्वेऽपि धार्म्मिकाः ॥" इति पाद्माच्च ॥६-७॥

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्द्ध्वं न संशयः ॥८॥

सारा०ब०—यस्मान्मद्भक्तिरेव श्रेष्ठा, तस्मात्त्वं भक्तिमेव कुर्व्विति तामुपदिशति-मय्येवेति त्रिभिः। एव-कारेण निर्व्विशेषव्यावृत्तिः। मयि श्यामसुन्दरे पीताम्बरे बनमालिनि मन आधत्स्व मत्स्मरणं कुर्व्वित्यर्थः। तथा मयि बुद्धिं बिबेकवतीं निवेशय, मन्मननं कुर्व्वित्यर्थः। तच्च मननं ध्यानप्रतिपादकशास्त्रबाक्यानुशीलनम्, ततश्च मय्येव निबसिष्यसीति छान्दसम्, मत्समीप एव निवासं प्राप्स्यसीत्यर्थः ॥८॥

गी०भू०—यस्मादेबं तस्मात्त्वं मय्येव न तु स्वात्मनि मन आधत्स्व समाहितं कुरु, बुद्धिं मयि निवेशयार्पय। एवं कुर्व्वाणस्त्वं मय्येव मम कृष्णस्य सन्निधावेब निबत्स्यसि, न तु सनिष्ठबत् सर्गादिकमनुभवन्नैश्वर्य्यप्रधानं मां प्राप्स्यसीत्यर्थः ॥८॥

अथ चित्तं समधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ॥९॥

सारा०ब०—साक्षात्-स्मरणासमर्थं प्रति तत्प्राप्त्युपायमाह-अथेति - अभ्यासयोगेनान्यत्रान्यत्र गतमपि मनः पुनः पुनः

प्रत्याहृत्य मद्रूप एव स्थापनमभ्यासः, स एव योगस्तेन। प्राकृतत्वादिति कुत्सितरूपरसादिषु चलन्त्या मनोनद्यास्तेषु चलनं निरुध्यातिसुभद्रेषु मदीयरूपरसादिषु तच्चलनं शनैः शनैः सम्पादयेत्यर्थः। हे धनञ्जयेति-बहून् शत्रून् जित्वा धनमाहृतवता त्वया मनोऽपि जित्वा ध्यानधनं ग्रहीतुं शक्यमेवेति भावः ॥९॥

गी०भू०—ननु गङ्गेव येषां मनोवृत्तिरोघवती, तेषां त्वत्प्राप्तिस्त्वरया स्यान्मम तु तादृशी न तद्वृत्तिस्ततः कथं सेति चेत्तत्राह-अथेति। स्थिरं यथा स्यात्तथा मयि चित्तं सम्यगनायासेनाधातुमर्पयितुं न शक्नोषि चेत्ततोऽभ्यासयोगेन मामाप्तुमिच्छ यतस्व-तत्तोऽन्यत्र गतस्य मनसः प्रत्याहृत्य शनैः शनैर्मयि स्थापनमभ्यासस्तेन मनसि मत्प्रवणे सति मत्प्राप्तिः सुलभा स्यादिति भावः ॥९॥

अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव।
मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥१०॥

सारा०ब०—अभ्यासेऽपीति-यथा पित्तदूषिता रसना मत्स्यण्डिकां नेच्छति, तथैवाविद्या-दूषितं मनस्त्वद्रूपादिकं मधुरमपि न गृह्णातीत्यतस्तेन दुर्ग्रहेन महाप्रबलेन मनसा सह योद्धुं मया नैव शक्यत इति मन्यसे चेदिति भावः। मत्कर्म्माणि परमाणि यस्य सः। कर्म्माणि मदीय-श्रवणकीर्त्तनवन्दनार्च्चन-मन्मन्दिरमार्जनाभ्युक्षणपुष्पाहरणादि-परिचरणानि कुर्व्वन्, विनापि मत्स्मरणं सिद्धिं प्रेमवत्पार्षदत्वलक्षणां प्राप्स्यसीति ॥१०॥

गी०भू०—ननु वायोरिव मनसोऽतिचापल्यात्तस्य प्रत्याहारे मम न शक्तिरिति चेत्तत्राह-अभ्यासेऽपीति। उक्तलक्षणेऽभ्यासेऽपि चेत्त्वमसमर्थस्तर्हि मत्कर्म्माणि परमाणि पुमर्थभूतानि यस्य तादृशो भव, तानि च मन्निकेतनिर्म्माणमत्पुष्पवाटीसेचनादीनि



पूर्व्वमुक्तानि। एवं सुकराणि मदर्थानि कर्म्माणि कुर्व्वाणस्त्वं तत्र तत्रातिमनोज्ञमन्मूर्त्त्युद्देशमहिम्ना तादृशे मयि निरतमनाः संसिद्धिं मत्सामीप्यलक्षणामवाप्स्यसीत्यतिसुगमोऽयमुपायः ॥१०॥

अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥११॥

सारा०ब०—एतदपि कर्त्तुमशक्तश्चेत्तर्हि मद्योगमाश्रितो मयि सर्व्वकर्म्मसमर्पणम्, मद्योगस्तमाश्रितः सन सर्व्वकर्म्मफलत्यागं प्रथमषट्कोक्तं कुरु। अयमर्थः-प्रथमषट्के भगवदर्पितनिष्कामकर्म्मयोग एव मोक्षोपाय उक्तः; द्वितीयषट्केऽस्मिन् भक्तियोग एव भगवत्प्राप्त्युपाय उक्तः। स च भक्तियोगो द्विविधः-भगवन्निष्ठोऽन्तःकरणव्यापारो बहिष्करणव्यापारश्च। तत्र प्रथमस्त्रिविधः-स्मरणात्मको, मननात्मकश्चाखण्डस्मरणासामर्थ्ये तदनुरागिनां तदभ्यासरूपश्चेति त्रिक एवायं मन्दधियां दुर्गमः, सुधियां निरपराधानान्तु सुगम एव; द्वितीयः श्रवणकीर्त्तनात्मकस्तु सर्व्वेषामेव सुगम एवोपायः। एवमुभयोपायवन्तोऽधिकारिणः सर्व्वतः द्वितीयषट्केऽस्मिन्नुक्ताः। एतत्कृत्यसमर्था इन्द्रियाणां भगवन्निष्ठीकृतावश्रद्धालवश्च भगवदर्पितनिष्कामकर्म्मिणः प्रथमषट्कोक्ताधिकारिणोऽस्मान्निकृष्टा एवेति ॥११

गी०भू०—अथ महाकुलीनत्व-लोकमुख्यत्वादिना प्रतिबन्धेन बाधितस्त्वमन्यो वै तन्मन्निकेत-विमार्ज्जनादि-मत्प्रीतिकरमतिसुकरमपि कर्म्म चेत्त कर्त्तुमशक्तोऽसि ततो मद्योगं मच्छरणतामाश्रितः सन् सर्व्वेषामनुष्ठीयमानानां कर्म्मणां फलत्यागं कुरु यतात्मवान् विजितमना भूत्वा, तथा च फलाभिसन्धिशून्यैरग्निहोत्रदर्शपौर्णमास्यादिभिर्मदाराधनरूपैः कर्म्मभिर्विघतन्तुवदन्तरभ्युदितेन ज्ञानेन स्वपरात्मनोः शेषशेषिभावेऽभ्युदिते स्वशेषिणि

सर्व्वोत्तमत्वेन विदिते शनैः शनैः परापि भक्तिः स्यादिति । एवमेव वक्ष्यति-'यतः प्रवृत्तिर्भूतानाम्' इत्यादिना 'मद्भक्तिं लभते पराम्' इत्यन्तेन ॥११॥

श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥१२॥

सारा०व०-अथोक्तानां स्मरणमननाभ्यासानां यथापूर्व्वं श्रैष्ठ्यं स्पष्टीकृत्याहश्रेयो हीति। अभ्यासाज्ज्ञानं मयि बुद्धिं निवेशयेत्युक्तं मन्मननं श्रेयः श्रेष्ठम्; अभ्यासे सत्यायासत एव ध्यानं स्यात्, मनने सति त्वनायासत एव ध्यानमिति विशेषात्तस्मात् ज्ञानादपि ध्यानं विशिष्यते-श्रेष्ठमित्यर्थः, कुत इत्यत आह-ध्यानात् कर्म्मफलानां स्वर्गादिसुखानां निष्कामकर्म्मफलस्य मोक्षस्य च त्यागस्तत्स्पृहा-राहित्यं स्यात्, स्वतः प्राप्तस्यापि तस्योपेक्षा । निश्चलध्यानात् पूर्व्वन्तु भक्तानामजातरतीनां मोक्षत्यागेच्छैव भवेत । निश्चलध्यानवतां तु मोक्षोपेक्षा, सैव मोक्षलघुताकारिणी, यदुक्तं भक्तिरसामृतसिन्धौ-"क्लेशघ्नी शुभदा" इत्यत्र षड्भिः पदैरेतन्माहात्म्यं कीर्त्तितमिति। यदुक्तम्-"न पारमेष्ठ्यं न महेन्द्र-धिष्ण्यं न सार्व्वभौमं न रसाधिपत्यम्। न योगसिद्धीरपुनर्भवं वा मय्यर्पितात्मेच्छति मद्विनान्यत्॥" इति । मय्यर्पितात्मा मद्ध्याननिष्ठः। त्यागाद्वैतृष्ण्यादनन्तरमेव शान्तिर्मद्रूपगुणा-दिकं विना सर्व्वविषयेष्वेवेन्द्रियाणामुपरतिः। अत्र पूर्व्वार्द्धे 'श्रेयः' इति 'विशिष्यते' इति पदद्वयेनान्वयादुत्तरार्द्धे तु 'अनन्त-रम्' इत्यनेनैवान्वयादेषैव व्याख्या सम्यगुपपद्यते नान्येत्य-वधेयम् ॥ १२ ॥

गी०भू०—सुकरत्वादप्रमादत्वाज्ज्ञानगर्भत्वाच्चानभिसंहितं फलं कर्म्मयोगं स्तौति,-श्रेयो हीति । अभ्यासान्मत्स्मृतिसा-



तत्यरूपादनिष्पन्नाज्ज्ञानं स्वात्मसाक्षात्कृतिरूपं श्रेयः प्रशस्त-तरम्, परमात्मोपलब्धिद्वारत्वात् ज्ञानाच्च तस्मादनिष्पन्नात् साध-नभूतं ध्यानं स्वात्मचिन्तनलक्षणं विशिष्यते-स्वहितत्वे श्रेयो भवति, ध्यानाच्च तस्मादनिष्पन्नात् कर्म्मफलत्यागस्तस्मिन् श्रेयान्, त्यक्तफलं कर्म्मैव प्रशस्ततरम्, त्यागादनन्तरं शान्तिस्त्यक्तफला-दनुष्ठितात् कर्म्मणोऽनन्तरं मनःशुद्धिरित्यर्थः। तथा च शुद्धे मनसि ध्यानं निष्पद्यते, निष्पन्ने ध्याने स्वसाक्षात्कृतिरूपं ज्ञानं, ज्ञाने निष्पन्ने तत्फलभूतं परमात्मज्ञानम्, तेन परा भक्तिस्तयै-श्वर्य्यप्रधानस्य मम प्राप्तिरिति दुर्गमोऽयमुपाय इति भावः। न चायमर्ज्जुनं प्रत्युपदेशस्तस्यैकान्तित्वात्। सन्निष्ठा निष्कामकर्म्म-रता हरिध्यायिनश्च स्वात्मानमनुभूय ततोऽभ्युदितया हरिविषय-कया षाड्गुण्यैश्वर्य्यगुणया परया भक्त्या हरिं प्रेमास्पदमनुभ-वन्तो विमुच्यन्त इति गीताशास्त्रार्थपद्धतिः। किन्त्वेकान्तित्वासक्तं प्रतीतिबोध्यम् ॥१२॥

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥१३॥
संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥१४॥

सारा०व०—एतादृश्याः शान्त्या भक्तः कीदृशो भवतीत्यपे-क्षायां बहुविधभक्तानां स्वभावभेदानाह-अद्वेष्टेत्यष्टभिः। अद्वेष्टा द्विषत्स्वपि द्वेषं न करोति, प्रत्युत मैत्रो मित्रतया वर्त्तते, करुण एषामसद्गतिर्मा भवत्विति बुद्ध्या तेष्वपि कृपालुः। ननु कीदृशेन विवेकेन द्विषत्स्वपि मैत्रीकारुण्ये स्याताम्, तत्र विवेकं विनैवेत्याह-निर्म्ममो निरहङ्कार इति-पुत्रकलत्रादिषु ममत्वा-

भावाद्देहे चाहङ्काराभावात् तस्य मद्भक्तस्य क्वापि द्वेष एव नैव फलति, कुतः पुनर्द्वेषजनितदुःखशान्त्यर्थं तेन विवेकः स्वीकर्त्तव्य इति भावः। ननु तदप्यन्यकृतपादुका-मुष्टिप्रहारादिभिर्देहव्यथाधीनं दुःखं किञ्चिद्भवत्येव ? तत्राह-समदुःखसुखम्; यदुक्तं भगवता चन्द्रार्द्धशेखरेण---"नारायणपराः सर्व्वे न कुतश्चन बिभ्यति। स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः ॥" इति। सुखदुःखयोः साम्यं समदर्शित्वम्, तच्च मम प्रारब्ध-फलमिदमवश्यभोग्यमिति भावनामयं, साम्येऽपि सहिष्णुनैव दुःखं सह्यत इत्याह-क्षमी क्षमवान्, क्षम सहने धातुः। नन्वेतादृशस्य भक्तस्य जीविका कथं सिध्येत ? तत्राह सन्तुष्टः-यदृच्छोपस्थिते किञ्चिद्यत्नोपस्थिते वा भक्ष्यवस्तुनि सन्तुष्टः। ननु समदुःखसुख इत्युक्तम् तत् कथं स्वभक्ष्यमालक्ष्य सन्तुष्ट इति तत्राह-सततं योगी भक्तियोगयुक्तो भक्तिसिद्ध्यर्थमिति भावः। यदुक्तम्—"आहारार्थं यतेतैव युक्तं तत्प्राणधारणम्। तत्त्वं विमृश्यते तेन तद्विज्ञाय परं व्रजेत्" इति। किञ्च दैवादप्राप्तभक्ष्योऽपि यतात्मा संयतचित्तः क्षोभरहित इत्यर्थः। दैवाच्चित्तक्षोभे सत्यपि तदुपशमार्थमष्टाङ्गयोगाभ्यासादिकं नैव करोतीत्याह-दृढनिश्चयोऽनन्यभक्तिरेव मे कर्त्तव्येति निश्चयस्तस्य न शिथिलीभवतीत्यर्थः। सर्व्वत्र हेतुः—मय्यर्पित-मनोबुद्धिर्मत्स्मरणमननपरायण इत्यर्थः। ईदृशो भक्तस्तु मे प्रियो मामतिप्रीणयतीत्यर्थः ॥ १३-१४ ॥

गी०भू०—एवमेकान्तिभक्तान् परिनिष्ठितादीननेकान्तिभक्तान् सनिष्ठांश्च तत्तत्साधनभेदैरुपवर्ण्य तेषां सर्व्वोपरञ्जकान् गुणान् विदधाति-अद्वेष्टेति सप्तभिः। सर्व्वभूतानामद्वेष्टा द्वेषं कुर्व्वत्स्वपि तेषु मत्प्रारब्धानुगुणपरेशप्रेरितान्यमूनि मह्यं द्विषन्तीति द्वेषशून्यः, परेशाधिष्ठानान्यमूनीति तेषु मैत्रः स्निग्धः, केनचिन्निमित्तेन खिन्नेषु माभूदेषां खेद इति करुणः, देहादिषु निर्म्ममः प्रकृतेरमी विकारा न ममेति तेषु ममताशून्यः, निरहङ्कारस्तेष्वात्माभिमानरहितः, समदुःखसुखः सुखे सति हर्षेण दुःखे सति उद्वेगेन चाव्याकुलः, यतः क्षमी तत्तत्सहिष्णुः सततं सन्तुष्टो लाभेऽलाभे च प्रसन्नचित्तः, यतो योगी गुरूपदिष्टोपायनिष्ठः, यतात्मा विजितेन्द्रियवर्गः, दृढनिश्चयो दृढः कुतर्कैरभिभवितुमशक्यतया स्थिरो निश्चयो हरेः किङ्करोऽस्मीति अध्यवसायो यस्य सः, अतो मय्यर्पितमनोबुद्धि, एवम्भूतो यो मद्भक्तः, स मे प्रियः प्रीतिकर्त्ता ॥१३-१४॥



यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥१५॥

मारा०ब०—किञ्च "यस्यास्ति भक्तिर्भगवत्यकिञ्चना, सर्व्वैर्गुणैस्तत्र समासते सुराः" इत्याद्युक्तेर्मत्प्रीतिजनका अन्येऽपि गुणा मद्भक्त्या मुहुरभ्यस्तया स्वतएवोत्पद्यन्ते तानपि त्वं शृणिवत्याह-यस्मादिति पञ्चभिः। हर्षादिभिः प्राकृतैर्हर्षामर्षभयोद्वेगैर्मुक्त इत्यादिनोक्तानपि कांश्चिद्गुणान् दुर्लभत्वज्ञापनार्थं पुनराह-यो न हृष्यतीति ॥ १५ ॥

गी०भू०—यस्माल्लोकः कोऽपि जनो नोद्विजते-भयशङ्कया क्षोभं न लभते, यः कारुणिकत्वाज्जनोद्वेजकं कर्म्म न करोति, लोकाच्च यो नोद्विजते-सर्व्वाविरोधित्वविनिश्चयाद्यदुद्वेजकं कर्म्म लोको न करोति, यश्च हर्षादिभिः कर्त्तृभिर्मुक्तो, न तु तेषां मोचने स्वयं व्यापारी-अतिगम्भीरात्मरतिनिमग्नत्वात्तत्स्पर्शेनापि रहित इत्यर्थः, तत्र स्वभोग्यागमोत्साहो हर्षः, परभोग्यागमासहनममर्षः, दुष्टसत्त्वदर्शनाधीनो वित्रासः भयं, कथं निरुद्यमस्य मम जीवनमिति विक्षोभस्तूद्वेगः-एताश्चतस्रः चित्तावृत्तयः ॥१५॥

**अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।**
**सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥१६॥**

सारा०ब०—अनपेक्षो व्यवहारिककार्य्यापेक्षारहित उदासीनो व्यवहारिकलोकेष्वनासक्तः सर्व्वान् व्यवहारिकान् दृष्टादृष्टार्थांस्तथा पारमार्थिकानपि कांश्चित् शास्त्राध्यापनादीनारम्भानुद्यमान् परिहर्त्तुं शीलं यस्य सः ॥ १६ ॥

गी०भू०—अनपेक्षः स्वयमागतेऽपि भोग्ये निस्पृहः, शुचिर्बाह्याभ्यन्तरपावित्रवान्, दक्षः स्वशास्त्रार्थविमर्शसमर्थः, उदासीनः परपक्षाग्राही, गतव्यथोऽपकृतोऽप्याधिशून्यः, सर्व्वारम्भपरित्यागी स्वभक्तिप्रतीपाखिलोद्यमरहितः ॥१६॥

**यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।**
**शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥१७॥**

गी०भू०—यः प्रियं पुत्रशिष्यादि प्राप्य न हृष्यति, अप्रियं तत् प्राप्य तत्र न द्वेष्टि, प्रिये तस्मिन् बिनष्टे न शोचति, अप्राप्तं तन्नाकाङ्क्षति, शुभं पुण्यमशुभं पापं तदुभयं प्रतिबन्धकत्वसाम्यात् परित्यक्तुं शीलं यस्य सः ॥१७॥

**समः शत्रौ च मित्रे च तथा मानापमानयोः ।**
**शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥१८॥**
**तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येन केनचित् ।**
**अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥१९॥**

सारा०ब०—अनिकेतः प्राकृतग्वास्पदासक्तिशून्यः ॥ १९ ॥

गी०भू०—समः शत्रौ चेति स्फुटार्थः । सङ्गवर्जितः कुसङ्गशून्यः | तुल्येति+ निन्दया दुःखं स्तुत्या सुखञ्च यो न बिन्दति, मौनी यतबाक् स्वेष्टमननशीलो वा, येन केनचिददृष्टाकृष्टेन रुक्षेण स्निग्धेन बान्नादिना सन्तुष्टः, अनिकेतो नियतनिबासरहितो निकेतमोहशून्यो वा, स्थिरमतिर्निश्चितज्ञानः । एष्वद्वेष्टेत्यादिषु सप्तसु येषु गुणानां पुनरप्यभिधानं तत्तेषामतिदौर्लभ्यज्ञापनार्थमित्यदोषः । सन्निष्ठादीनां त्रिबिधानां भक्तानां सम्भूय स्थिता एतेऽद्वेष्टृत्वादयो धर्म्मा यथासम्भव-तारतम्येनैव सुधीभिः सङ्गमनीयाः ॥१८-१९॥



**ये तु धर्म्मामृतमिदं यथोक्तं पर्य्युपासते ।**
**श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥२०॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्व्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मबिद्यायां योगशास्त्रे श्रीकृष्णार्ज्जुनसंबादे भक्तियोगो नाम द्वादशोऽध्यायः ।



सारा०ब०--उक्तान् बहुविध-स्वभक्तनिष्ठान् धर्म्मानुपसंहरन् कार्त्स्न्येनैतल्लिप्सूनां तच्छ्रबणबिचारणादिफलमाह- ये त्विति । एते भक्त्युत्थशान्त्युत्थधर्म्मा न प्राकृता गुणाः,—"भक्त्या तुष्यति कृष्णो न गुणैः" इत्युक्तिकोटितः । 'तु'-भिन्नोपक्रमे उक्तलक्षणा भक्ता एकैकसुस्वभावनिष्ठाः । एते तु तत्तत्सर्व्वसल्लक्षणेप्सवः साधका अपि तेभ्यः सिद्धेभ्योऽपि श्रेष्ठाः, अतएवातीवेति पदम् ॥ २० ॥

सर्व्वश्रेष्ठा सुखमयी सर्व्वसाध्यसुसाधिका ।
भक्तिरेबाद्भुतगुणेत्यध्यायार्थो निरूपितः ॥ (२)
निम्बद्राक्षे इब ज्ञानभक्ती यद्यपि दर्शिते ।
आदीयेते तदप्येते तत्तदास्वाद--लोभिभिः ॥ (३)

इति सारार्थवर्षिण्यां हर्षिण्यां भक्तचेतसाम् ।
गीतासु द्वादशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ (४)

गी०भू०—उक्तभक्तियोगमुपसंहरन् तस्मिन्निष्ठा-फलमाह-ये त्विति । ये भक्ता यथोक्तं 'मय्यावेश्य मनो ये माम्' इत्यादिभिर्यथागतमिदं धर्म्मामृतं पर्य्युपासते-प्राप्यं मामिव प्रापकं तत् समाश्रयन्ति, श्रद्दधाना भक्तिश्रद्धालवो मत्परमा मन्निरतास्ते ममातीव प्रिया भवन्ति ॥२०॥

वशः स्वैकजुषां कृष्णः स्वभक्त्येकजुषां तु सः ।
प्रीत्यैवातिवशः श्रीमानिति द्वादशनिर्णयः ॥

इति श्रीमद्भगवद्गीतोपनिषद्भाष्ये द्वादशोऽध्यायः ।

# त्रयोदशोऽध्यायः

अर्जुन उवाच—

प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च ।
एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव ॥

श्रीभगवानुवाच—

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदः ॥१॥

सारा०व०—नमोऽस्तु भगवद्भक्त्यै कृपया स्वांशलेशतः ।
ज्ञानादिष्वपि तिष्ठेत्तत् सार्थकीकरणी यया ॥(१)
षट्के तृतीयेऽत्र भक्तिमिश्रं ज्ञानं निरूप्यते ।
तन्मध्ये केवला भक्तिरपि भङ्ग्या प्रकृष्यते ॥(२)



त्रयोदशे शरीरञ्च जीवात्म--परमात्मनोः ।
ज्ञानस्य साधनं जीवः प्रकृतिश्च विविच्यते ॥(३)

तदेवं द्वितीयेन षट्केन केवलया भक्त्या भगवत्प्राप्तिः; ततोऽन्या अहंग्रहोपासनाद्यास्तत्र उपासनाश्चोक्ताः । अथ प्रथमषट्कोदितानां निष्कामकर्म्मयोगिनां भक्तिमिश्रज्ञानादेव मोक्षस्तच्च ज्ञानं संक्षेपादुक्तमपि पुनः क्षेत्र-क्षेत्रज्ञादि-विवेचनेन विवरितुं तृतीयं षट्कमारभते ॥ १ ॥

गी०भू०—कथिताः पूर्व्वषट्काभ्यामर्थाज्जीवादयोऽत्र ये ।
स्वरूपाणि विशोध्यन्ते तेषां षट्केऽन्तिमे स्फुटम् ॥
भक्तौ पूर्व्वोपदिष्टायां ज्ञानं द्वारं भवत्यतः ।
देहजीवेशविज्ञानं तद्वक्तव्यं त्रयोदशे ॥

गी०भू०—आद्यषट्के निष्कामकर्म्मसाध्यं जीवात्मज्ञानं परमात्मज्ञानोपयोगितया दर्शितम्, मध्यषट्के तु 'भक्ति शब्दितं परमात्मोपासनं तन्महिमनिगदपूर्व्वकं उपदिष्टम्, तच्च केवलं तद्वश्यताकरं सत्त्वात्प्रापकम् । आर्त्तादीनां तु तमुपासीनानामार्त्तिविनाशादिकरं तदेकान्तिप्रसङ्गेन केवलं सत्त्वात्प्रापकञ्च । योगेन ज्ञानेन चोपसृष्टं त्वैश्वर्य्यप्रधानतद्रूपोपलम्भकं मोचकं चेत्युक्तम् । तथास्मिन्नन्त्यषट्के प्रकृतिपुरुषतत्संयोगहेतुक-जगत्तादीश्वरस्वरूपाणि कर्म्मज्ञान-भक्ति स्वरूपाणि च विविच्यन्ते । ज्ञानवैशद्याय एतावत्त्रयोदशेऽस्मिन्नध्याये देह-जीव-परेश-स्वरूपाणि विवेचनीयानि, देहादिविविक्तस्यापि जीवात्मनो देहसम्बन्धहेतुस्तद्विवेकानुसन्धिप्रकारश्च विमर्शनीयः । तदिदमर्थजातमभिधातुं भगवानुवाच-इदमिति । हे कौन्तेय ! इदं सेन्द्रियप्राणं शरीरं भोक्तुर्जीवस्य भोग्यसुखदुःखादि-प्ररोहकत्वात् क्षेत्रमित्यभिधीयते तत्त्वज्ञैः । एतच्छरीरं देवोऽहं मानवोऽहं स्थूलोऽहमित्यज्ञैरात्मभेदेन प्रतीयमानमपि यः शय्यासनादिवदात्मनो भिन्नमात्मभोगमोक्षसाधनञ्च वेत्ति, तं वेद्याच्छरीराद्वेदितृतया भिन्नं